# TARKĀMṚTA

OF

MM. JAGADĪŚA TARKALAṀKĀRA

With *VIVRITI* COMMENTARY

*BY*

MAHOPĀDHYĀYA JIBAN KRISHNA TARKATĪRTHA

R625
15L4




THE ASIATIC SOCIETY
1974

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

BIBLIOTHECA INDICA—A COLLECTION OF ORIENTAL WORKS

# TARKĀMṚTA

OF

MM. JAGADĪŚA TARKALAṀKĀRA

With *VIVRITI* COMMENTARY

*BY*

MAHOPĀDHYĀYA JIBAN KRISHNA TARKATĪRTHA




THE ASIATIC SOCIETY

1974

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

BIBLIOTHECA INDICA—A COLLECTION OF ORIENTAL WORKS

महामहोपाध्यायश्रीजगदीशतर्कालङ्कारविरचितम्

# तर्कामृतम्

महोपाध्याय श्रीजीवनकृष्णतर्कतीर्थविरचितया

विवृत्या सहितम्




दि एशियाटिक सोसाईटि

१९७४

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# PREFACE

THE Tarkamṛta is one of the original texts on Navya Nyāya (Neo-logic) from the pen of Mahāmahopādhyāya Jagadīśa Tarkālaṁkāra Bhattāchāryya, who flourished in Navadvipa (West Bengal) towards the end of 16th and early 17th century. The illustrious Mahāmahopādhyāya in a lucid style analysed critically the categories (*Padārtha*) accepted by the Navya-Nyāya school in this concise treatise.

Mahopādhyāya Jivan Krishna Tarkatīrtha deserves our congratulations for preparing an elaborate commentary on this important text not attempted before. It removes a long felt want of the students of logic and philosophy. The commentary bears the stamp of profound knowledge of Pandit Jivan Krishna as well as his capacity of elucidating the abstruse themes of modern logic. We are also thankful to Dr. H. K. De Choudhuri for his kind co-operation in the publication of the volume.

The Asiatic Society undertook publication of the text with commentary on the suggestion of late Mm. Pandit Kalipada Tarkāchāryya and is pleased to present it to the scholars.

May 1974

S. K. MITRA
*General Secretary*

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## ॥ तर्कामृतम् ॥

ब्रह्माद्या निखिलार्च्चितास्त्रिदशसन्दोहाः सदाभीष्टदा
अज्ञानप्रशमाय यत्र मनसो वृत्तिं समस्तां दधुः ।
श्रीविष्णोश्चरणाम्बुजं भवभयध्वंसैकवीजं परं
हृत्पद्मे विनिधाय तन्निरुपमं तर्कामृतं तन्यते ॥१॥

## ॥ विवृतिः ॥

श्रीकृष्णचरणाम्भोजमज्ञानध्वान्तनाशनम् ।
ज्ञानज्योतिःप्रदं सम्यग्विघ्नविध्वंसकारणम् ॥
निधाय मानसे भक्त्याक्षपादप्रतिमं गुरुम् ।
महामहोपाध्यायं तं नवद्वीपदिवाकरम् ॥
समुज्ज्वलप्रज्ञालोकालोकितक्षितिमण्डलम् ।
प्रणम्य कामाख्यानाथतर्कवागीशमर्च्चितम् ॥
तर्कामृताख्यो यो ग्रन्थो जगदीशेन निर्म्मितः ।
विप्रो जीवनकृष्णस्तं विवृणोति यथामति ॥

तत्र तावत्तर्कामृताख्य ग्रन्थं चिकीर्षुस्तत्रभवान् जगदीशतर्कालङ्कारो निर्व्विघ्नपरिसमाप्तये शिष्टाचारानुमितया 'समाप्तिकामो मङ्गलमाचरेत्' इति श्रुत्या बोधितकर्त्तव्यताकमिष्टदेवतानमस्कृतिरूपं मङ्गलं समाचरन् शिष्यशिक्षायै निबध्नाति ब्रह्माद्या इत्यादि । अज्ञानप्रशमायेति । ज्ञानसाध्ये ग्रन्थप्रणयने प्रतिबन्धकं मदीयाज्ञानं विनश्यत्विति तात्पर्य्यम् । यत्किञ्चिन्मानसवृत्तिधारणस्याज्ञानानिवर्त्तकत्वादुक्तं समस्तामिति । स्वग्रन्थे प्रेक्षावत्प्रवृत्तयेऽभिधेयं प्रदर्शयति तर्कामृतमिति । नात्र तर्कपदभापत्तिमात्रपरंतन्मात्रस्य प्रदर्शने न्यूनतापत्तेः किन्तु तर्क्यन्ते प्रतिपाद्यन्ते इति-व्युत्पत्त्या भावादिपरमिति बोध्यम् । ग्रन्थाभिधेययोः ज्ञाप्यज्ञापकभावः सम्बन्धः । प्रयोजनन्तु भावादिपदार्थतत्त्वज्ञानद्वारामोक्ष इत्यवधेयम् । तथा च 'ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः' ॥ इति प्रेक्षावत्प्रवर्त्तकं वचनम् ॥१॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ तर्कामृतम् ॥

अथ श्रुतिः श्रूयते 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति। अस्यार्थः—मुमुक्षुणा आत्मा द्रष्टव्यः, मुमुक्षोरात्मदर्शनमिष्टसाधनमिति यावत्। आत्मदर्शनोपायः क इत्यत्राह श्रोतव्य इत्यादि। तेनार्थक्रमेण शाब्दक्रमस्त्यक्तो भवति 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यादिवत्। तथा च श्रवणमनननिदिध्यासनानि तत्त्वज्ञानजनकानीत्युक्तं भवति। अत्र श्रुतितः कृतात्मश्रवणस्य मननेऽधिकारः मननञ्च आत्मन इतरभिन्नत्वेनानुमानं, तच्च भेदप्रतियोगीतरज्ञानसाध्यम्, तथाचेतरदेव कियदित्येतदर्थं पदार्थनिरूपणम् ॥२॥

॥ विवृतिः ॥

धर्म्मार्थकामानामखिलदुःखनिदानानिवर्त्तकत्वेन परमपुरुषार्थत्वाभावान्निःश्रेयसस्य च सर्वानर्थोपरमस्यात्मतत्त्वसाक्षात्कारसाध्यत्वादात्मतत्त्वसाक्षात्कारस्य च श्रवणादिसाध्यस्य निखिलप्रपंचधर्म्मिकानात्मत्वनिश्चयं विनाऽसम्भवात् पदार्थनिरूपणद्वारा मननोपयोगित्वेन प्रपंचं प्रपञ्चयिष्यन् वृहदारण्यकश्रुत्योपद्घातं प्रक्रमते अथ श्रुतिरिति। द्रष्टव्य इति। मानससाक्षात्कारविषयीभूतः कर्तव्य इत्यर्थः। आत्ममानससाक्षात्कारे आत्मश्रवणादीनां कारणत्वादाह श्रोतव्य इत्यादि। श्रोतव्यः—शाब्दबोधविषयीभूतः कर्त्तव्यः। मन्तव्यः—इतरभिन्नत्वेनानुमातव्य;। ननु कथमेतत् संगच्छते शाब्दसिद्धेरनुमितिप्रतिबन्धिकायाः सत्त्वादिति चेन्न सिसाधयिषाविरहविशिष्टाया एव सिद्धेरनुमितिप्रतिबन्धकत्वात। अत्र तु मुमुक्षोः सिसाधयिषासत्त्वेनानुपपत्तिविरहात। निदिध्यासितव्य इति। सततं ध्यानविषयीभूतः कर्त्तव्य इत्यर्थः। तथाचोक्तं 'श्रोतव्यः श्रुतिवाक्येभ्यः मन्तव्यश्चोपपत्तिभिः। मत्त्वा च सततंध्येय एते दर्शनहेतवः' ॥ इति ॥ द्रष्टव्य इत्यत्र तव्यप्रत्ययार्थं विवृणोति इष्टसाधनमिति। श्रवणादोनामात्मदर्शने किंविधयोपयोगित्वमिति प्रतिपादयितुमाहात्मदर्शनोपाय इति। ननु श्रवणादीनामात्मदर्शनं प्रति हेतुत्वात् 'निदिध्यासितव्यः' इत्यस्यानन्तरमेव 'द्रष्टव्यः' इत्यस्याभिधानमुचितम्। तथा च 'व्रीहीन् प्रोक्षति' 'व्रीहीन् अवहन्ति' इत्यादिवच्छब्दार्थक्रमयोरव्यभिचार उपपद्यते। उक्तश्रुतौ तु तथानभिधानात् शब्दार्थक्रमयोर्व्यभिचार इत्याशङ्कामपनेतुमाहार्थक्रमेणेत्यादि। अयम्भावः—अर्थाः—आत्मदर्शनन्तद्धेतवः श्रवणादयश्च, तत्सम्बन्धी यः क्रमः—पौर्व्वापर्य्यम्—कार्यस्य कारणोत्तरभावित्वं, तेनार्थक्रमेण, शब्दाः—द्रष्टव्यः श्रोतव्य इत्यादयः, तत्सम्बन्धी यः क्रमः द्रष्टव्यशब्दस्य पश्चादभिधेयत्वमानतरूपः शाब्दक्रमः परित्यक्तो भवतीति। तथाचाक्रमतः शब्दाभि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

धाने अप्यार्थक्रमस्यान्यथाकर्त्तुमशक्यत्वाच्छब्दक्रमोऽकिंचित्कर इति भावः। इममेवार्थमनुरूपदृष्टान्तेन द्रढयति अग्निहोत्रमित्यादि। यवागूपचनाभिधायकवाक्यस्याक्रमतः पश्चादभिहितत्वेऽपि अग्निहोत्रहवने होमद्रव्य-यवागूपाकानन्तरभाविताया अव्यभिचारादार्थक्रम उपपन्न इति तात्पर्य्यम्। श्रुतेःपर्य्यवसितार्थमाह श्रवणेत्यादि। तत्त्वज्ञानजनकानीति। तत्त्वज्ञानं—देहादिभिन्नत्वेनात्मसाक्षात्कारस्तज्जनकानीत्यर्थः। तत्र निदिध्यासनस्य साक्षाज्जनकत्वमितरयोस्तु परम्परयेति बोध्यम्। श्रुतित इति। अत्र श्रुतिपदं स्मृतीतिहासादेरप्युपलक्षकम्। तदुक्तमाचार्य्यैः 'श्रुतो हि भगवान् बहुशः श्रुतिस्मृतीतिहासपुराणादिषु' इति। कृतात्मश्रवणस्येति। कृतमात्मश्रवणमात्मविषयकशाब्दबोधरूपं येनेत्यर्थः। श्रुतौ यो मननपदार्थस्तमाह मननं चेति। अनुमितेः पक्षप्रदर्शनायाहात्मन इति। तथा चात्मा इतरेभ्यो भिद्यते आत्मत्वात्, य इतरेभ्यो न भिद्यते स न आत्मा यथा घटादिः, न तथा चायम्, तस्मान्न तथेति व्यतिरेकिप्रयोगो वेदितव्यो य आत्मा स इतरेभ्यो भिद्यते इत्याद्यन्वयिप्रयोगो न सम्भवत्यात्ममात्रस्य पक्षत्वात्। पदार्थज्ञानं विना तादृशानुमानस्यासम्भवादाह तच्चेति। उक्तानुमानं चेत्यर्थः। पदार्थज्ञानस्य साध्यज्ञानसाधकत्वादाह इतरज्ञानसाध्यमिति। अभावबोधमात्रस्यैव विशिष्टवैशिष्ट्यावगाहिबोधात्मकत्वात् सुतरां विशिष्टज्ञानत्वाच्च प्रतियोगिज्ञानस्य विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन वा विशेषणज्ञानत्वेन वा प्रतियोगिज्ञानत्वेन वाऽभावबुद्धौ कारणतायाः कल्पनादिति भावः। विषयतया ज्ञानं प्रति तादात्म्येन विषयत्वेन हेतुत्वादितरज्ञानस्य विषयं दर्शयितुमाह तथाचेत्यादि। इतरदेव कियदित्येतदर्थमिति। इतरदेव कियदितिजिज्ञासाविनिवृत्त्यर्थमित्यर्थः। शिष्यावधानाय प्रतिजानीते पदार्थनिरूपणमिति। कियत इति शेषः। पदार्थाः—वक्ष्यमाणभावादिपदप्रतिपाद्या अर्थास्तेषां निरूपणं—प्रतिपत्त्यनुकूलव्यापार इत्यर्थः। ननु कथमेतत् संगच्छतेऽग्रे 'आत्मा द्विविधो जीवात्मा परमात्मा च' इत्यनेनात्मनो निरूपणादर्थान्तरादिति चेन्न अनात्मपदार्थानामनिरूपणे साध्यज्ञानाभावादिवात्मनोऽनिरूपणे पक्षज्ञानविरहादपि मननानुपपत्तेरात्मन आकांक्षितत्वात्। तथा च साध्यघटकत्वेनानात्मनां पक्षत्वेन चात्मनो निरूपणमिति हृदयम् ॥ २ ॥

## ॥ तर्कामृतम् ॥

सामान्यतः पदार्थो द्विविधो भावोऽभावश्च। भावः षड्विधो द्रव्यगुणकर्म्मसामान्यविशेषसमवायभेदात्। तत्र द्रव्यत्वगुणत्वकर्म्मत्वानि जातयः, सामान्यत्वादीनि उपाधयः। द्रव्याणि नव पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि। आकाशत्वकालत्वदिक्त्वान्युपाधयः, अन्यानि जातयः ॥ ३ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## ॥ विवृतिः ॥

यद्यपि सूत्रकारैर्द्रव्यत्वादिनैव पदार्थविभजनं विहितं न तु भावत्वादिना तथापि द्रव्यादिष्वनुगतभावत्वादिसत्त्वाद् भावत्वादिना विभागः समुचितः सत्यनुगतविभाजक-व्यापक-धर्म्मान्तरे तत्परित्यागस्यानुचितत्वादित्याशयेनाह सामान्यत इति। विशेष-रूपेणाविवक्षात इत्यर्थः। पदार्थविभाजकावान्तरोपाधिद्वयविशिष्ट इत्यर्थस्तेन पदार्था-नामानन्त्येऽपि न क्षतिः। अत्र विधप्रत्ययार्थस्तु उद्देश्यतावच्छेदकसमनियतवस्तुमदन्य-संख्यावत्त्वम्। उद्देश्यतावच्छेदकं च पदार्थत्वम्। समनियतत्वं च व्यापकत्वे सति व्याप्यत्वम्। व्यापकत्वं व्याप्यत्वं च स्वाश्रयाश्रयत्वसम्बन्धेन। वस्तुमदन्यत्वं संख्या-विशेषणम्। तादृशी च संख्या भावत्वाभावत्वगता द्वित्वरूपा। वस्तुमत्त्वं च स्ववृत्तित्व-स्वान्यस्वसमानाधिकरणवृत्तित्वोभयसम्बन्धेन ग्राह्यम्। भावोऽभावश्चेति। तत्र भावत्वं द्रव्यादिषट्कान्यतमत्वमभावत्वं च द्रव्यादिषट्कान्योन्याभाववत्त्वमखण्डो-पाधिर्व्वा।

ननु कथं भावत्वेन पदार्थविभागः सङ्गच्छते सर्व्वेषामेव पदार्थानामभावात्मक-त्वात्, तथाहि यथा द्रव्याभावोऽभावस्तथा द्रव्यमपि द्रव्याभावाभावस्यैव द्रव्यात्म-कत्वात्। एवं गुणादावपि। उच्यते। कुत्रचिद्भावत्वस्यासिद्धत्वेऽभावत्वस्याप्यसिद्धि-र्भावनिष्ठप्रतियोगितानिरूपकस्यैवाभावत्वनियमात्। तथा चाभावत्वस्योपपत्तये भाव-त्वस्याभ्युपगम आवश्यकः। न चाभावत्वस्याखण्डोपाधिरूपत्वान्नानुपपत्तिरिति वाच्यं तथात्वे विनिगमनाविरहाद् भावत्वस्यापि तद्रूपताया अभ्युपगमात्। किञ्च 'घटेन जलमाहर' इत्यादिव्यवहारात् 'घटाभावाभावेन जलमाहर' इत्याद्यव्यवहाराच्च जला-हरणादिहेतुत्वस्याभावत्वासहचरितत्वेनानुभूयमानस्य भावत्वसाधकत्वोपगमात्।

ननु कणादैश्चतुर्थसूत्रेऽभावस्यानुद्देशात् कथमभावत्वस्य पदार्थविभाजकत्वमिति चेन्नाभावत्वस्य साक्षादनुद्दिष्टत्वेऽपि भावविरोधितयानुभूयमानस्यापलपितुमशक्य-त्वात्। तदुक्तं 'अभावश्च वक्तव्यो निःश्रेयसोपयोगित्वाद्भावप्रपञ्चवत्। कारणा-भावेन कार्याभावस्य सर्व्वमतसिद्धत्वादुपयोगित्वासिद्धेः' इतिवल्लभाचार्यैः। आचार्यै-रपि 'अभावस्तु स्वरूपवानपि नोद्दिष्टः प्रतियोगिनिरूपणाधीननिरूपणत्वान्नतु तुच्छ-त्वात्' इति।

भावं विभजते षड्विध इति। तद्विधाः प्रदर्शयति द्रव्यगुणकर्म्मेत्यादि। तत्र शास्त्रस्य परमप्रयोजनापवर्गभागित्वादितरपदार्थाश्रयत्वाच्चादौ द्रव्यस्य ततो द्रव्या-श्रितत्वाद् द्रव्याभिव्यङ्ग्यत्वाच्च गुणस्य ततो द्रव्यजन्यत्वाद् गुणजन्यत्वाच्च कर्म्मण-स्ततो द्रव्यगुणकर्म्माश्रितत्वात् सामान्यस्य ततो द्रव्ये सामान्यसमानाधिकरण-त्वाद्विशेषस्य ततो विशेषसम्बन्धत्वात् समवायस्योल्लेख इति बोध्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भावाश्रितानां द्रव्यत्वादीनां षण्णामसाधारणधर्म्माणामेकरूपत्वविरहाद् भेदं प्रदर्शयितुमाह तत्र द्रव्यत्वेत्यादि। जातय इति। जातित्वन्तावन्नित्यानेकसमवेतत्वरूपम्। तत्र द्रव्यत्वस्य संयोगादिसमवायिकारणतावच्छेदकतया गुणत्वस्य कर्म्मत्वस्य च गुणकर्म्मनिष्ठकारणतावच्छेदकतयानुगतप्रत्यक्षविषयतया वा जातित्वमवसेयम्। न हि तत्तन्निष्ठस्य कारणत्वस्य निरवच्छिन्नत्वमन्यधर्म्मावच्छिन्नत्वम्वा निरवच्छिन्नकारणत्वस्य तत्रासिद्धत्वादन्यधर्म्मस्य च न्यूनातिरिक्तवृत्तित्वेनानवच्छेदकत्वात्। सामान्यत्वादीनीति। आदिना विशेषत्वादेरुपग्रहः। उपाधय इति। अखण्डधर्म्मा इत्यर्थः। न च सामान्यत्वादेर्न्न कथं जातित्वमिति वाच्यम् बाधकषट्काभावस्य जातित्वनियामकत्वादत्र त्वनवस्थादेर्व्वाधकस्य सत्त्वात्। तदुक्तं 'व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसंग्रहः' ॥ इति ॥

भावेषु द्रव्यं विभजते द्रव्याणि नवेत्यादि। पृथिव्याद्याश्रितेषु साधारणधर्म्मेषु जातीनामुपाध्यपेक्षया बाहुल्याल्लाघवत आदावुपाधीनेव विशिष्य निर्दिशत्याकाशत्वेत्यादि। एतेनोद्देशक्रमभङ्ग इति निरस्तम्। उपाधय इति। अखण्डधर्म्मा इत्यर्थः। एकव्यक्तिवृत्तिकत्वेन जातित्वविरहादिति भावः। अन्यानीति। आकाशत्वादिभ्यो भिन्नानि पृथिवीत्वादीनीत्यर्थः। तेषाञ्च गन्धादिसमवायिकारणतावच्छेदकतया जातित्वं सिद्धम्। आत्मत्वजातिस्तु सुखादिसमवायिकारणतावच्छेदकतया सिद्धापीश्वरे न वर्त्तते सुखाद्युत्पादप्रसङ्गान्नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावनियमादित्येके। अन्ये तूक्तनियमस्याप्रयोयकत्वाददृष्टादिरूपकारणविरहादेव सुखाद्यनुत्पादोपपत्तेरीश्वरेऽप्यात्मत्वं विद्यत एव। अतएव 'आत्मा वाऽरेद्रष्टव्यः' इत्यादिश्रुतौ 'अहमात्मा गुडाकेशः सर्व्वभूताशयस्थितः' इति भगवद्वाक्ये चेश्वरमभिप्रेत्यात्मशब्दप्रयोगः सङ्गच्छत इति प्राहुः ॥३॥

## ॥ तर्कामृतम् ॥

तत्र रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराश्चतुर्द्दशगुणाः पृथिव्याम्। तत्रैव गन्धं विहाय स्नेहं विनियोज्य चतुर्द्दशगुणा जलस्य। रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारा एकादश गुणास्तेजसः। स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा नव गुणा वायोः। शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः षड् गुणा आकाशस्य। संख्यापरिमाणपृथक्त्वसंयोगविभागाः पञ्च गुणाः कालदिशोः। संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्मसंस्काराश्चतुर्द्दश गुणा आत्मनः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा अष्टौ गुणा मनसः। ज्ञानेच्छाकृतिसंख्यादिपञ्चकमष्टौ गुणा ईश्वरस्य। तथाच

'वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्द्दश।
दिक्कालयोः पञ्च षड़ेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव' ॥४॥

॥ विवृतिः ॥

अथ साधर्म्यवैधर्म्यप्रदर्शनार्थं कस्य द्रव्यस्य कियत्संख्यकगुणवत्त्वं साधर्म्यमिति निरूपयति तत्र रूपरसेत्यादि। न चात्र कथं गुणानामुद्देशव्यतिक्रम इति शङ्क्यं द्रव्यविचारस्यावशिष्यमानत्वादग्रे गुणोद्देशस्य क्रियमाणत्वाच्च। आत्मन इति। जीवस्येत्यर्थः। ईश्वरस्य सुखादिविरहात् पृथग्वक्ष्यमाणत्वाच्च। स्वोक्तं तत्तद्द्रव्ये तत्तद्गुणवत्त्वंसाधर्म्यं प्राचीनसंवादेन द्रढ़यति वायोरित्यादि। प्राणभृतां—जीवानाम्। महेश्वरे—परमात्मनि ॥४॥

॥ तर्कामृतम् ॥

पृथिवीजलतेजोवायवो द्विविधाः परमाणवः सावयवाश्च। आकाशकालात्मदिशो विभुरूपाः। मनः परमाणुरूपम्। तत्र सावयवा अनित्या इतराणि नित्यानि। सावयवा अपि त्रिविधाः शरीरेन्द्रियविषयभेदात्। मानुषं शरीरं पार्थिवम्। जलीयं शरीरं वरुणलोके प्रसिद्धम्। तैजसं शरीरमादित्यलोके। वायवीयं शरीरं वायुलोके। घ्राणेन्द्रियं पार्थिवम्। रसनेन्द्रियं जलीयम्। चक्षुरिन्द्रियं तैजसम्। त्वगिन्द्रियं वायवीयम्। श्रोत्रेन्द्रियं कर्णशष्कुल्यवच्छिन्नं नभःप्रदेशः। एतानि पञ्च बहिरिन्द्रियाणि। मनोऽन्तरिन्द्रियम्। तेन षड़िन्द्रियाणि। विषयाश्च शब्दादिरूपेण प्रसिद्धाः। आत्मा द्विविधो जीवात्मा परमात्मा च। तत्र जीवात्मानः प्रतिशरीरं भिन्ना बन्धमोक्षयोग्याः। परमात्मा ईश्वरः ॥५॥

॥ विवृतिः ॥

अथोद्दिष्टद्रव्याणि विचारयितुमुपक्रमते तत्र पृथिवीजलेत्यादि। परमाणवइति एतेषां येऽविभाज्याः परमसूक्ष्मतमाश्चरमोपादानभूतास्तइत्यर्थः। सावयवा इति। अवयवाः समवायिकारणं तत्र समवेता द्व्यणुकाद्या अन्त्यावयव्यन्ता इत्यर्थः। आकाशादीनामवयवावयविभावासिद्धेराह विभुरूपा इति। परममहत्परिमाणविशिष्टा इत्यर्थः। सर्व्वत्र शब्दोत्पत्तेराकाशस्य, मूर्त्तमात्रे ज्येष्ठत्वकनिष्ठत्वोत्पत्तेः कालस्य, सर्व्वत्र ज्ञानोत्पत्तेरात्मनः, सर्व्वमूर्त्ते दूरत्वसामीप्योत्पत्तेश्च दिशो विभुत्वमभ्युपेयमिति भावः। मनसो विभुत्वे विभुद्वयसंयोगानुपगमे आत्ममनःसंयोगासिद्ध्याऽसमवायि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कारणाभावाज्ज्ञानानुत्पादप्रसङ्गेन सुषुप्त्युच्छेदापत्तिश्च स्यादत आह मनःपरमाणुरूपमिति। न चोक्तदूषनान्मनसो विभुत्वं न स्यात् किन्तु घटादिवन्मध्यमपरिमाणे का क्षतिरिति वाच्यम्, तथा सति तस्मिन् युगपज्ज्ञानेन्द्रियसन्निकर्षसम्भवाच्चाक्षुषादिविजातीयज्ञानानां साङ्कर्य्यप्रसङ्गात्। न च चाक्षुषाद्येकजातीयज्ञानं प्रति तद्विजातीयज्ञानसामग्र्याः प्रतिबन्धकत्वकल्पनान्नैष दोष इति वाच्यं कारणतावच्छेदकगौरवापत्तेः। सावयवा अनित्या इति। कारणनाशजन्यनाशप्रतियोगित्वादित्यर्थः। इतराणि—निरवयवानि। नित्यानीति। कारणासत्त्वादिति भावः। पुनर्विभजते सावयवा अपीत्यादि। विधात्रयमाह शरीरेत्यादि। तत्र शरीरत्वं चेष्टेन्द्रियार्थाश्रयत्वं प्रयत्नवदात्मसंयोगासमवायिकारणकक्रियावदन्त्यावयवित्वञ्चेष्टावदन्त्यावयवित्वम्वा न जातिः पृथिवीत्वादिना सह साङ्कर्य्यप्रसङ्गात्। इन्द्रियत्वं स्मृत्यजनकज्ञानजनकमनःसंयोगाश्रयत्वं शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्वा न जातिः पृथिवीत्वादिना सह साङ्कर्य्यप्रसङ्गात्। विषयत्वन्तु देहेन्द्रियभिन्नत्वम्। सावयवभेदं शरीरं निर्दिशति मानुषशरीरमिति। मानुषादीनां शरीरमित्यर्थः। पार्थिवमिति। पृथिवीमात्रोपादानकमित्यर्थः। प्रत्यक्षसिद्धमिति शेषः। पार्थिवत्वे प्रमाणन्तु गन्धादिमत्त्वमितिभावः। यद्यपि मानुषादिशरीरे स्नेहोष्णस्पर्शादेः सत्त्वाज्जलीयत्वादेरप्यापत्तिः सम्भवति तथापि पृथिव्या एव तत्रोपादानत्वमपरचतुर्भूतानान्तूपभोगसाधकतया निमित्तत्वमेकत्र विजातीयानेकद्रव्योपादानकत्ववाधादित्यदोषः। एवमेव जलीयादिशरीराण्यपि व्याख्येयानि। पार्थिवादिभेदेन शरीरस्य चतुर्विधत्वाज्जलीयादिशरीराणि निर्द्दिशति जलीयमित्यादिना। वरुणलोके प्रसिद्धमिति। आगमादिप्रसिद्धेरिति शेषः। वायुलोके इति। तथाचैतच्चतुर्विधशरीरेषु 'द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते'॥ इति पञ्चदशीकारोक्तमविरुद्धमिति मन्तव्यम्।

सावयवभेदान्तरमिन्द्रियं निरूपयति घ्राणेन्द्रियमित्यादि। पार्थिवमिति। गन्धमात्राभिव्यञ्जकद्रव्यत्वादिति शेषः। जलीयमिति। रसमात्राभिव्यञ्जकत्वादिति शेषः। तैजसमिति। स्पर्शाद्यव्यञ्जकत्वे सति रूपव्यञ्जकद्रव्यत्वादिति शेषः। वायवीयमिति। विजातीयस्पर्शाभिव्यञ्जकद्रव्यत्वादिति शेषः। श्रवणेन्द्रियस्य स्वरूपप्रदर्शनेन तस्याकाशत्वमाह कर्णशष्कुल्येत्यादि। तथा च कर्णशष्कुल्यवच्छेदेनैव शब्दग्रहाच्छब्दाश्रयत्वस्यैव आकाशत्वाच्छ्रोत्रस्याकाशात्मकत्वं स्पष्टमिति भावः। उपसंहर्त्तुमाह एतानीत्यादि। वहिरिन्द्रियाणीति। अत्र वहिष्ट्वं न तावन्महद्ग्राहकत्वमात्मनोऽपि महत्त्वात्, नाप्यात्मभिन्नद्रव्यग्राहकत्वमाकाशादेरपि तादृशद्रव्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्वात् । नापि विभ्वन्यद्रव्यग्राहकत्वं परमाण्वादेर्म्मनसश्च तथाविधद्रव्यत्वात्, किंत्वात्म-बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-तत्तन्मात्रवृत्तिजात्यन्यपदार्थलौकिकप्रत्यक्षकरणत्वरूपं बोध्यम् । तथा च परमाणुद्व्यणुकगगनादिपञ्चकगुरुत्वादीनामतीन्द्रियत्वाल्लौकिक-प्रत्यक्षाविषयतया न काचिदनुपपत्तिः । अथ वा घ्राणादिपञ्चकान्यतमत्वमेव लाघवाद्वहिष्ट्वं वाच्यम् । मनस इन्द्रियत्वेऽप्युक्तपञ्चकभिन्नत्वादाह मनोऽन्तरिन्द्रिय मिति । अत्रान्तस्त्वं नामोक्तभेदप्रतियोगिपदार्थलौकिकप्रत्यक्षकरणत्वं घ्राणाद्यन्यत्वे सतीन्द्रियत्वम्वा ।

निरवयवत्वेनाकाशादीनां तुल्यत्वेऽपि तेष्वात्मन एव प्रत्यक्षविषयत्वात् प्रत्यक्ष-करणेन्द्रियनिरूपणप्रसङ्गे नाहात्मा द्विविध इति । जीवानां प्रतिदेहं भिन्नत्वाभावे चैत्रमैत्रादेर्भोगादिवैचित्र्यं बन्धमोक्षव्यवस्थादिश्च नोपपद्यतेऽत आह प्रतिशरीरं भिन्ना इति । बन्धमोक्षयोग्या इति । बन्धो मिथ्याज्ञानमनात्मन्यात्मत्वप्रकारकमात्म-न्यनात्मत्वप्रकारकम्वा । मोक्षस्त्वात्यन्तिकीदुःखनिवृत्तिरिति बोध्यम् । परमात्मा-ईश्वर इति । ईश्वरात्मनः परमत्वञ्च सुखदुःखादिराहित्यम् । तथा चेश्वराज्जीवो भिद्यते सुखादिमत्त्वादिति भावः । अत्रैकवचननिर्द्देशादीश्वरस्यैकत्वं बोध्यमन्यथा वैफल्यापत्तिः सृष्ट्याद्यनुपपत्तिश्च द्रष्टव्या ॥५॥

## ॥ तर्कामृतम् ॥

अथ प्रत्यक्षाप्रत्यक्षद्रव्याणि । परमाणुद्व्यणुकेऽप्रत्यक्षे । महदुद्भूतरूपवत्त्वं यत्र तानि पृथिवीजलतेजांसि प्रत्यक्षाणि । आत्मा च प्रत्यक्षः । वाय्वाकाशकालदिङ्मनांसि तु अप्रत्यक्षाणि । वहिर्द्रव्यशप्रत्यक्षं प्रति महत्त्वे सत्युद्भूतरूपवत्त्वं प्रयोजकम् ॥६॥

## ॥ विवृत्तिः ॥

अथ विशेषप्रतिपत्त्यर्थं पुनर्द्रव्यं विचारयितुमुपक्रमते प्रत्यक्षाप्रत्यक्षेति । अप्रत्यक्षे इति । लौकिकप्रत्यक्षायोग्ये इत्यर्थो योगिनामलौकिकप्रत्यक्षगोचरत्वादिति भावः । बहिर्लौकिकप्रत्यक्षकारणमाह महदुद्भूतेत्यादि । अणुद्व्यणुकयोरतिव्याप्तिवारणाय महदिति । घ्राणादावनतिप्रसक्तये उद्भूतेति । वायावतिप्रसङ्गनिरासार्थमाह रूपेति । वस्तुतस्तु अत्र 'तानि पृथिवीजलतेजांसि' इत्युक्तेर्व्वायोरलक्ष्यत्वमेवातो महत्त्वमात्रस्य प्रयोजकत्वाभिधानेऽपि न दोषस्त्र्यणुकादारभ्यान्त्यावयविपर्य्यन्तानां सर्व्वेषामेव पृथि-व्यादित्रयाणां महत्त्ववत्त्वादिति ध्येयम् । वहिरिन्द्रियजन्यप्रत्यक्षाविषयत्वेऽपि आत्मनः 'अहं सुखी' इत्यादिरीत्या प्रत्यक्षत्वादाहात्मा चेति । प्रत्यक्ष इति । स्वशरीरावच्छेदेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मानसलौकिकप्रत्यक्षविषय इत्यर्थः। परकीयशरीरावच्छेदेन तु प्रवृत्त्यादिनानुमेयत्वं तस्य वोध्यम्। प्रत्यक्षद्रव्याण्युक्त्वाऽप्रत्यक्षद्रव्याणि निरूपयति वाय्वाकाशेति। यद्यप्यणुद्व्यणुकयोरप्रत्यक्षत्वाभिधानेनैव वायवीयपरमाण्वादेरप्रत्यक्षत्वमुक्तमेव तथापि सर्व्वेषामेवान्त्यावयव्यन्तानां वायूनामप्रत्यक्षत्वसूचनायात्र वायोः प्रवेशः। अप्रत्यक्षाणीति। वहिरिन्द्रियकरणकलौकिकप्रत्यक्षाविषयीभूतानीत्यर्थः। तेन निखिलपदार्थेषु योगिनामलौकिकप्रत्यक्षविषयत्वसत्त्वेऽपि न क्षतिः। इदमत्र भाव्यं 'चक्षुषा रूपेण घटं पश्यामि' 'त्वचा स्पर्शेन वायुं गृह्णामि' इत्यादिव्यवहारात् स्वतन्त्रान्वयव्यतिरेकाभ्यां चाक्षुषप्रत्यक्षे रूपस्य, त्वाच्प्रत्यक्षे स्पर्शस्य कारणत्वमुपेतव्यन्न तु वहिरिन्द्रियजद्रव्यप्रत्यक्षमात्रे रूपस्य हेतुत्वं मानाभावात्। तथा च वायोरपि प्रत्यक्षत्वमेवेति नव्याः। इत्थञ्च तन्मते वायुरप्रत्यक्षो नीरूपवहिर्द्रव्यत्वादित्यत्र हेतोर्व्बाधितत्वमुक्तरीत्या वायोः प्रत्यक्षत्वस्य सिद्धत्वात्। यत्तु द्वितीयाध्याये कणादेन 'स्पर्शश्च वायोः' इतिसूत्रेण वायोरनुमेयत्वमुपपादितं तच्च वायुप्रत्यक्षे विप्रतिपन्नं वोधयितुमिति दिक्। पृथिव्यादित्रयाणामात्मनश्च प्रत्यक्षत्वेऽपि कार्यकारणतावच्छेदकभेदस्य तत्रावश्यकत्वात्तथैवोपसंहरति वहिर्द्रव्येत्यादि। वहिर्व्वत्वं आत्मान्यद्रव्यत्वम्। आत्मप्रत्यक्षे व्यभिचारवारणाय कार्यतावच्छेदककुक्षौ वहिष्ट्वं निवेशितम्। गुणादिप्रत्यक्षेऽव्यभिचारार्थं। तत्रैव द्रव्यपदम्। न च प्रत्यक्षस्यात्मनि जायमानत्वात्तत्र च रूपवत्त्वविरहान्न कार्य्यकारणसामानाधिकरण्यमिति वाच्यं लौकिकविषयत्वस्यैव कार्य्यतावच्छेदकसम्वन्धत्वात् ॥६॥

## ॥ तर्कामृतम् ॥

अथ द्रव्योत्पत्तिप्रक्रिया। तत्रोत्पत्तिः कारणवतः। अनन्यथासिद्धनियतपूर्व्ववर्त्तिकारणम्। तत्त्वं कारणत्वम्। त्रिविधानि कारणानि—समवायिकारणासमवायिकारणनिमित्तकारणानि। यत् समवेतं कार्य्यमुत्पद्यते तत् समवायिकारणम्, यथा परमाणुर्द्व्यणुकस्य, कपालं घटस्य। समवायिकारणे सम्वद्धं कारणमसमवायिकारणम्, यथा परमाणुद्वयसंयोगो द्व्यणुकस्य, कपालरूपं घटरूपस्य। एतदुभयभिन्नं यत् कारणं तन्निमित्तकारणम्, यथा द्व्यणुके ईश्वरः, घटे दण्डः। एतत् कारणत्रयं भावकार्य्यमात्रस्य। तत्र समवायिकारणं सर्व्वत्र द्रव्यमेव। असमवायिकारणं द्रव्ये गुणो गुणे गुणः कर्म्म च। कार्य्यमात्रं प्रति साधारणकारणानि—ईश्वरस्तज्ज्ञानेच्छाकृतयः प्रागभावकालदिगदृष्टानि। तत्र परमाणुद्वयसंयोगाद् द्व्यणुकमुत्पद्यते, संयुक्तद्व्यणुकत्रयात्त्रसरेणुः। एवं चतुरणुकादिकपालान्तं, कपालद्वयसंयोगेन घटो जायते, घटस्त्वन्त्यावयवी ॥७॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ विवृतिः ॥

प्रकारान्तरेण द्रव्यसाधर्म्यवैधर्म्ये निरूप्य न्यूनतापरिहाराय जन्यद्रव्याणामुत्पत्तिप्रकारमुपपादयितुमवतारयति अथ द्रव्योत्पत्तिरिति। तत्रेति। द्रव्येषु मध्ये इत्यर्थः। उत्पत्तिरिति। आद्यक्षणसम्बन्ध इत्यर्थः। तदाद्यक्षणत्वञ्च तदधिकरणक्षणध्वंसानधिकरणत्वे सति तदधिकरणक्षणत्वरूपम्। नित्यानामनाद्यनन्तत्वादुत्पत्त्यसम्भवादाह कारणवत इति। प्रागभावप्रतियोगिन इत्यर्थः। कारणस्वरूपं निर्व्वक्ति अनन्यथासिद्धेति। अनुगतस्यान्यथासिद्धत्वस्य दुर्न्निर्व्वचत्वाद् यत्र यत्र यद्यत् कार्य्येऽन्यथासिद्धत्वव्यवहारः प्रामाणिकस्तत्तत्कार्य्ये तत्तद्भेदकूटवदित्यर्थः। अन्यथासिद्धिश्च—

'येन सह पूर्व्वभावः कारणमादाय वा यस्य
अन्यं प्रति पूर्व्वभावे ज्ञाते यत् पूर्व्वभावविज्ञानम्।
जनकं प्रति पूर्व्ववर्त्तितामपरिज्ञाय न यस्य गृह्यते,
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्व्वभाविनः॥

इत्यनेनाभिहिता द्रष्टव्या। मणिकृतस्तु अन्यथासिद्धस्य त्रैविध्यमाहुः। नियतपूर्व्ववर्त्तीति। न च नियतपूर्व्ववर्त्तित्वनिवेशनं व्यर्थमन्यथासिद्धभिन्नत्वस्यैव लाघवतः कारणत्वादिति वाच्यं भेदकूटलाघवार्थं तन्निवेशस्यावश्यकत्वादन्यथाऽनियतपूर्व्ववर्त्तिनामन्यथासिद्धानां भेदस्याप्यन्यथासिद्धभेदकूटमध्ये प्रवेशाद् गौरवापत्तेः। नियतपूर्व्ववर्त्तित्वञ्च कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वरूपं बोध्यम्। तथा च घटादिकार्य्ये दण्डत्वाद्यन्यथासिद्धेऽतिव्याप्तिवारणायानन्यथासिद्धेति। विशेषविभागस्य सामान्यलक्षणज्ञानापेक्षत्वात् कारणसामान्यलक्षणमुक्त्वा कारणविभागमाह त्रिविधानि कारणानीति। विधात्रयं दर्शयति समवायीत्यादि। विभक्तानामपि कारणानामितरेतरव्यावृत्तिज्ञानस्य प्रत्येकलक्षणज्ञानाधीनत्वात् समवायिकारणलक्षणमुद्देशक्रमेणादावाह यत् समवेतमिति। यस्मिन् समवायसम्बन्धेन वृत्तिमत् सदित्यर्थः। समवायिकारणमिति। समवायसम्बन्धेन कार्य्याधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकधर्म्मवत्त्वं समवायिकारणत्वमिति भावः। न च समवायेन घटाद्यधिकरणे कपालादौ द्रव्यत्वादिना भेदस्याप्यसत्त्वादतिव्याप्तिरिति वाच्यं तद्रूपेणान्यथासिद्धत्वात्। अत्र कार्य्यतावच्छेदकसम्बन्धत्वं समवायस्य कारणतावच्छेदकसम्बन्धत्वं तादात्म्यस्येति बोध्यम्। अथवा समवायसम्बन्धावच्छिन्नकार्य्यतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छेदकधर्म्मवत्त्वं समवायिकारणत्वमिति बोध्यम्। लक्ष्यं प्रदर्शयति यथा परमाणुरिति। नित्ये लक्ष्यत्वमुक्त्वाऽनित्ये तदाह कपालमिति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

असमवायिकारणं लक्षयति समवायिकारणे सम्बद्धमिति। समवाय-स्वसमवायिसमवेतत्वान्यतरसम्बन्धेन वृत्तिमत् सदित्यर्थः। तथा च समवायसम्बन्धेन कार्य्याधिकरणवृत्तिप्रोक्तान्यतरसम्बन्धावच्छिन्नात्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वमसमवायिकारणत्वमिति भावः। न च समवायसम्बन्धेन घटाधिकरणे प्रोक्तान्यतरसम्बन्धेन द्रव्यत्वादेरप्यभावस्यासत्त्वादतिप्रसङ्ग इति वाच्यं द्रव्यत्वत्वादिपुरष्कारेणान्यथासिद्धत्वात्। अथवात्र सर्व्वत्र कारणतावच्छेदकः सम्बन्धः समवायः, कार्य्यतावच्छेदकसम्बन्धस्तु क्वचित् समवायः क्वचिच्च स्वसमवायिसमवायः। तथा च समवायस्वसमवायिसमवायान्यतरसम्बन्धेन कार्य्याधिकरणवृत्तिसमवायसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वं तदिति ज्ञेयम्। अत्रापि तादृशप्रतियोगितानवच्छेदकधर्म्मान्तिरपुरष्कारेणान्यथासिद्धत्वाददोष इति ध्येयम्। समवायसम्बन्धेन लक्ष्यमुदाहरति परमाणुद्वयेति। परम्परयोदाहरति कपालरूपमिति। समवायिकारणे सम्बद्धत्वस्यासमवायिकारणत्वघटकत्वे कपालादिसम्बद्धानां कपालचक्रसंयोगादीनामपि घटाद्यसमवायिकारणत्वापत्तिः। न चेष्टापत्तिः, तन्नाशे घटाद्यनाशादसमवायिकारणनाशस्य कार्य्यद्रव्यनाशकत्वनियमात्। एवं वेगादेरभिघाताद्यसमवायिकारणत्वापत्तिः। अतस्तत्तात्कार्य्यासमवायिकारणलक्षणे तत्ताद्भिन्नत्वं निवेशनीयन्नतु सामान्यलक्षणे तत्ताद्भेदो निवेश्यस्तस्य तस्य कार्य्यान्तरासमवायिकारणत्वात् किन्तु ज्ञानादेरिच्छाद्यसमवायिकारणत्वं वारयितुं सामान्यलक्षणे ज्ञानादिभिन्नत्वं प्रवेश्यमात्मविशेषगुणानां कुत्रापि कार्य्येऽसमवायिकारणत्वविरहादिति संक्षेपः।

निमित्तकारणं लक्षयत्येतदुभयभिन्नमिति। तत्तत् कार्य्यं प्रति तत्तत्समवाय्यसमवायिभिन्नमित्यर्थस्तेनोभयभिन्नत्वस्य प्रत्येकं सत्त्वेऽपि समवायिकारणत्वस्य असमवायिकारणत्वस्य चानुगतस्य विरहेऽपि च न क्षतिः। यत्र च ध्वंसादिकार्य्ये समवायिकारणाद्यप्रसिद्धिस्तत्र भिन्नान्तमनुपादेयमेव। तत्रत्यनिमित्तकारणलक्षणन्तु कारणसामान्यलक्षणमेव लक्ष्यभेदेन लक्षणभेदस्यादोषत्वात्। अतएव वक्ष्यति ग्रन्थकारः 'एतत् कारणत्रयं भावकार्य्यमात्रस्य' इति। केचित्तु एतदुभयभिन्नमित्यस्य स्वाश्रयसमवायित्वसम्बन्धावच्छिन्नकार्य्यताप्रतियोगिकाभाववत्त्वे सति स्वाश्रयासमवायित्वसम्बन्धावच्छिन्नकार्य्यताप्रतियोगिकाभाववदित्यर्थः। एवञ्च ध्वंसादिकार्य्ये समवाय्यसमवायिकारणयोरप्रसिद्धत्वेऽपि अन्यत्र प्रसिद्धोक्तसम्बन्धद्वयावच्छिन्नकार्य्यताप्रतियोगिकाभावद्वयवत्त्वात् प्रतियोग्यादेर्न्निमित्तकारणत्वमुपपद्यत इति वदन्ति। जगन्निमित्तत्वादीश्वरस्य निमित्तकारणत्वमुदाहरति द्वयणुके ईश्वर इति। सर्गाद्यकालीनद्वयणुकारम्भकपरमाणुद्वयसंयोगजनककर्म्मणोऽस्मदादिप्रयत्नजन्यत्वबाधादीश्वरस्य निमित्तत्वसिद्धिरिति भावः। नित्यस्य निमित्तकारणत्वमुक्त्वाऽनित्यस्य तदुदाहरति घटे दण्ड इति। अभावस्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विशेषणताविशेषसम्बन्धेन वृत्तिमतः समवाय्यसमवायिकारणयोरप्रसिद्धे रुपसंहरति एतदिति। भावकार्य्यमात्रस्येति मात्रपदेनाभावात्मककार्य्यव्यवच्छेदः।

तदेतत्त्रिविधकारणत्वं कस्य कस्य साधर्म्म्यमित्याकाङ्क्षयाह तत्र समवायिकारणमित्यादि। तत्र-कारणत्रयेषु मध्ये। गुणादौ जन्यस्यासमवेतत्वात् समवायि-कारणताया असम्भवादाह द्रव्यमेवेति। अत्रैवकारस्यान्ययोगव्यवच्छेदार्थकत्वेन गुणादिव्यवच्छेदकत्वं बोध्यम्। अतएवोक्तं विश्वनाथेन 'समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्' इति। महर्षिणापि 'कारणमिति द्रव्ये कार्य्यसमवायात् इति' सूत्रेण तथैवाभिहितं द्रष्टव्यम्। न चोत्पत्तिकालावच्छेदेन घटादौ समवायिकारणत्वमव्याप्तमिति वाच्यं समवायिकारणवृत्तिसत्तान्यजातिमत्त्वस्य विवक्षिततत्वात्। असमवायिकारणत्वं न द्रव्यसाधर्म्म्यं द्रव्येऽसमवायिकारणताया असम्भवादत आह द्रव्ये गुण इति। यथा कपालसंयोगादेर्घटाद्यसमवायिकारणत्वमिति। द्रव्यमिव गुणं प्रत्यपि गुणादेरसमवायिकारणत्वादाह गुणे गुण इति। यथा घटरूपादौ कपालरूपादेरसमवायिकारणत्वमवयवगुणानामवयविनिष्ठगुणासमवायिकारणत्वात्तादृशावयविगुणानां कारणगुणप्रक्रमजन्यत्वनियमात्। तदुक्तं विश्वनाथेन 'अपाकजास्तु स्पर्शान्ता द्रवत्वञ्च तथाविधम्। स्नेहवेगगुरुत्वैकपृथक्त्व परिमाणकम्॥ स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः'॥ इति। कर्म्म चेति। संयोगविभागादेः क्रियाजन्यत्वादिति भावः। इदमुपलक्षणं कर्म्मण्यपि गुणस्यासमवायिकारणत्वमववेयम्। यथा शरस्पन्दादौ शरवेगादिकम्। सर्व्वत्रैव पदार्थे निमित्तकारणतायाः सम्भवान्निमित्तकारणत्वं कस्य साधर्म्म्यमिति विस्पष्टं निर्देष्टुमशक्यत्वेऽपि कार्य्यसामान्यं प्रति कारणनिरूपणेन तदाह कार्य्यमात्रं प्रतीति। कार्य्यत्वावच्छिन्नं प्रतीत्यर्थः। साधारणकारणानीति। साधारणत्वं नाम जन्यत्वव्यापककार्य्यतानिरूपितत्वम्। तथा च यादृशकारणतानिरूपितकार्य्यता जन्यत्वव्यापिका तादृशकारणताश्रयीभूतानीत्यर्थः। ईश्वर इति। कार्य्यमात्र एवेश्वरस्य नियतपूर्व्ववर्त्तित्वेन कारणत्वमिति भावः। न चेश्वरस्यान्यथासिद्धत्वं स्यादिति वाच्यं क्षित्याङ्कुरादिकार्य्यविशेषे सकर्त्तृकत्वान्यथानुपपत्त्येश्वरस्यानन्यथासिद्धत्वे वाच्ये विनिगमनाविरहेण कार्य्यमात्र एवानन्यथासिद्धत्वस्य वक्तव्यत्वात्। तस्य च सर्व्वमूर्त्तसंयोगित्वाद् द्रव्यात्मककार्य्ये तन्निष्ठकारणतावच्छेदकः सम्बन्धस्तादात्म्यम्, तन्निरूपितकार्य्यतावच्छेदकः सम्बन्धस्तु संयोगः। गुणादौ तु कार्य्ये स्वाश्रयसंयोगादेः कार्य्यतावच्छेदकसम्बन्धत्वं तादात्म्यस्य च कारणतावच्छेदकसम्बन्धत्वम्। अथवा समवायस्वरूपान्यतरसम्बन्धेन कार्य्यं प्रति स्वज्ञानविषयत्वसम्बन्धेनेश्वरस्य कारणत्वमित्यादिकमूह्यम्। ईश्वरस्य कारणत्वे सिद्धे विनिगमकाभावेन तदीयज्ञानेच्छाकृतीनां नित्यानां कार-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

णत्वमावश्यकमित्याह तज्ज्ञानेत्यादि। विषयितासम्बन्धेन कार्य्यमात्रं प्रति तादात्म्ये-नैषां कारणत्वमिति भावः। जन्यमात्रस्यैवोत्पत्तेः प्रागभाव उत्पत्या च तस्य विनाशोऽनुभवसिद्धोऽतः स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रागभावस्य कारणताया अभ्युपगन्तव्यत्वादाह प्रागभावेति। स्वनिष्ठप्रतियोगितानिरूपकत्वं कार्य्यतावच्छेदकस्तादात्म्यञ्च कारणतावच्छेदकः सम्बन्ध इति बोध्यम्।

'इह तन्तौ पटो भूतः' इत्यादिप्रत्ययात्तन्त्वादेरिव 'इदानीं पटो भवति' 'तदानीं पट उत्पद्यते' 'युगपद् घटपटादय उत्पद्यन्ते' इत्यादि प्रत्ययात् तत्तत् कार्योत्पत्त्यधिकरणत्वं तत्तत्कालस्यानुभूयते। ततश्च तदुत्पत्त्यधिकरणस्य तदुत्पत्तिकारणत्वनियमात् तदुत्पत्तिकारणत्वस्य च तत्कारणत्वव्याप्यत्वात्तत्कार्य्यकारणत्वं तत्तत्कालस्य सिद्धम्। एवञ्च यद्विशेषयोरितिन्यायेन कार्य्यसामान्ये कालसामान्यस्य कारणत्वसिद्धिरित्याशयेनाह कालेति। तदुक्तं महर्षिणा कणादेन 'नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति' इति। अत्र कार्य्यतावच्छेदकः सम्बन्धः कालिकः, कारणतावच्छेदकः सम्बन्धस्तु तादात्म्यम्।

'इह कपाले घटो जातः' इत्यादिप्रत्ययेन यथा कपालस्य घटोत्पत्त्यधिकरणतया घटकारणत्वं तथा 'पूर्व्वस्यां पटो जातः' 'प्रतीच्यां घट उत्पन्नः' इत्यादिप्रत्ययेन पूर्व्वादिदिशस्तत्तत्कार्य्योत्पत्त्यधिकरणतया तत्तत्कार्य्यकारणत्वमनुभवसिद्धम्। तथाचोक्तन्यायेन कार्य्यसामान्ये दिक्सामान्यस्य कारणता कल्पनीयेत्याशयेनाह दिगिति। अत्र कारणतावच्छेदकः सम्बन्धस्तादात्म्यम्, कार्य्यतावच्छेदकः सम्बन्धस्तु दैशिकविशेषणता।

अदृष्टस्य जीवविशेषगुणत्वाज्जीवानाञ्चासंख्यत्वाज्जन्योत्पादमात्रस्य सवीजप्रयोजनकत्वादुपभोगस्यैव च प्रयोजनत्वाद् यत्कार्य्यं येनोपभुज्यते तत्कार्य्यस्य तददृष्टवीजकत्वं वाच्यम्। एवञ्चेदानीन्तनोत्पन्नघटादेरपि भोक्त्रदृष्टजन्यत्वात् सर्व्वत्र कार्य्येऽदृष्टस्य कारणताभ्युपेया, कथमन्यथा चैत्रेणैतत् कार्य्यमुपभुज्यते नतु मैत्रेणेति दृश्यते इत्याशयेनाहादृष्टानीति। वस्तुतस्त्विदमुपलक्षणं 'सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः। प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः'॥ इत्याचार्य्योक्तमप्यत्रानुसन्धेयम्। अत्र तु कालिकसम्बन्धेनैव कार्य्यकारणभावस्य सुवचत्वात् कार्य्यकारणतावच्छेदकसम्बन्धत्वं कालिकस्येति ध्येयम्।

द्रव्योत्पत्तिप्रक्रियायाः प्रतिज्ञातत्वादुत्पत्तिनिर्व्वाहकतया कारणानि निरूप्येदानीं प्रतिज्ञातार्थमुपपादयितुमाह परमाणुद्वयसंयोगादिति। ईश्वरीयचिकीर्षाजनितपरमाणुक्रियेत्यादिः। संयुक्तद्व्यणुकद्वयात् त्रसरेणोरुत्पादो न सम्भवति त्रसरेणोर्म्म-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ह्रस्वात्तन्महत्त्वस्य च द्व्यणुकगतत्रित्वसंख्याजन्यत्वान्महत्त्वानुपपत्तेः, नापि द्व्यणुकं विनैव संयुक्तपरमाणुत्रयात्, महदारम्भकत्वेन त्रसरेण्ववयवस्य सावयवत्वनियमादत आह संयुक्तद्वयणुकत्रयादिति। चतुरणुकादीति। संयुक्तैश्चतुर्भिस्त्रसरेणुभिरित्यादिः। आदिना पञ्चाणुकादेरुपग्रहः। घटस्यावयवत्वासिद्धेराह घटस्त्वन्त्यावयवीति। चरमावयवीत्यर्थः। तत्त्वञ्च समवायेन द्रव्यवद्भिन्नत्वम्। इदमुपलक्षणमनया रीत्या चतुरणुकादिक्रमेण महती पृथिवी, महज्जलम्, महत् तेजः, महान्वायुरुत्पद्यते इति कार्य्यरूपपृथिव्यादिचतुष्टयात्मकं जगज्जायते। एवं ब्राह्मशतवर्षान्ते परमेश्वरस्य सञ्जिहीर्षया परमाणुक्रियया परमाणुद्वयसंयोगनाशतो द्वयणुकादिनाशक्रमेण महतां पृथिव्यादिचतुष्काणामन्त्यावयव्यन्तानां नाशात् परमाणुपर्य्यवसानं जगद् भवति। तदेव प्रलय इत्युच्यते। पुनश्चानादिजीवविचित्रकर्म्मवशादीश्वरः सृष्टयादिकं जगतो विधाय तन्मितकाले प्रलयं करोति 'ब्रह्मणो वर्षशतमायुः' इति श्रुतेः। स एव सृष्टिप्रलयप्रवाह इत्युच्यते। एवं प्रवाहे प्रचलति सति क्वचित्तथाभूतः कालः समायाति यत्रोक्तप्रवाहस्य महाविश्रामस्तत्र कालेन यावतां जीवकर्म्मणां नाशात् पुनः सृष्टिवीजाभावात् सकलजन्यात्यन्तोपरमः। स एव महाप्रलय इत्यभिधीयते। दीधितिकृतस्तु प्रमाणाभावान्महाप्रलयो नाभ्युपगन्तव्य इति प्राहुः ॥७॥

## ॥ तर्कामृतम् ॥

अथ द्रव्ये प्रमाणं कथ्यते। प्रत्यक्षद्रव्ये प्रत्यक्षमेव प्रमाणमतीन्द्रियेऽनुमानम्। तत्पक्षहेतुसाध्यदृष्टान्तज्ञानसाध्यम्। विशेषो वक्ष्यते। परमाणुद्वयणुकानुमानं यथा— त्रसरेणुः सावयवद्रव्यारब्धो वहिरिन्द्रियवेद्यद्रव्यत्वात्, वहिरिन्द्रियवेद्यद्रव्यं यद्यत् तत् सावयवद्रव्यारब्धं यथा घटः। अत्र त्रसरेणुः पक्षः, सावयवद्रव्यारब्धत्वं साध्यं, वहिरिन्द्रियवेद्यद्रव्यत्वादिति हेतुः, घटो दृष्टान्तः। अनेन द्वयणुकं परमाणुश्च सिध्यति ॥८॥

## ॥ विवृतिः ॥

प्रमाणागोचरेऽर्थे प्रेक्षावतामप्रवृत्तेर्भाविषु प्रथमोद्दिष्टे द्रव्ये प्रमाणाभिधित्सया प्रतिजानीतेऽथ द्रव्ये इत्यादि। प्रमाणमिति। प्रमाणत्वं प्रमितिकरणत्वं, तच्चाग्रे व्यक्तीभविष्यति। द्रव्यत्वस्य परमाण्वादावपि सत्त्वादाह प्रत्यक्षद्रव्य इति। लौकिकप्रत्यक्षविषयीभूते महत्त्वादिविशिष्टद्रव्य इत्यर्थः। अन्यथाऽतीन्द्रियेऽप्यलौकिकप्रत्यक्षस्य प्रमाणत्वसम्भवेन तत्रानुमानस्य प्रमाणत्वं वक्ष्यमाणमसङ्गतं स्यादिति भावः। प्रत्यक्षविषये वह्न्यादावनुमित्सासत्त्वेऽनुमानगम्यत्वदर्शनेऽपि तत्र तदनुमानस्य न तत्सत्त्वं प्रति प्रमाणत्वं किन्तु पूर्व्वोत्पन्नस्य प्रत्यक्षस्यैव, एकप्रमाणेन प्रमेयसिद्धौ तत्र प्रमा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

णान्तरस्य साधकत्व कल्पनानौचित्याशयेनाह प्रत्यक्षमेवेति। लौकिकप्रत्यक्षमेवेत्यर्थः। एवकारेणालौकिकप्रत्यक्षानुमानादेर्व्यवच्छेदः।

द्रव्याणां प्रत्यक्षाप्रत्यक्षद्रव्यभेदभिन्नानां मध्ये प्रत्यक्षद्रव्ये प्रमाणमुक्त्वाऽप्रत्यक्षद्रव्ये तदाहातीन्द्रिये इति। अस्मदादीन्दियाग्राह्ये महत्त्वादिशून्ये इत्यर्थः। तेन परमाण्वादेर्योगिमानसप्रत्यक्षगोचरत्वेऽपि न क्षतिः। सम्भवदिन्द्रियसन्निकर्षे विषय एव प्रत्यक्षस्य प्रमाणत्वादतीन्द्रिये चेन्द्रियसन्निकर्षस्यासम्भवेन प्रत्यक्षस्य प्रमाणत्वासम्भवादाहानुमानमिति। प्रमाणमित्यत्रान्वेति। तदिति। अनुमानमित्यर्थः। विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वात् स्वार्थानुमान इव परार्थानुमानेऽपि पक्षहेतुसाध्यज्ञानं कारणं वाच्यं 'व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यं ज्ञानमनुमितिस्तत्करणमनुमानं, तच्च लिङ्गपरामर्शः' इति मणिकृतोक्तत्वात्, किञ्च सहचारदर्शनाधिष्ठानतया स्वार्थानुमान इवोदाहरणोपयोगितया परार्थानुमानेऽपि दृष्टान्तस्य हेतुत्वात्तद्विषयकज्ञानस्य हेतुत्वमुपेतव्यमित्येतत् पर्य्यालोच्याह पक्षहेत्वित्यादि। सिषाधयिषितसाध्यधर्म्मा धर्म्मी पक्षः। पञ्चम्यन्तं लिङ्गप्रतिपादकं वचनं हेतुः। साधनीयं—साध्यताख्यविलक्षणविषयतावत् साध्यम्। यत्रार्थे लौकिकपरीक्षकानां बुद्धिसाम्यं सोऽर्थो दृष्टान्तः। स्वार्थपरार्थभेदेनानुमानद्वैविध्यस्य वक्ष्यमाणत्वादाह विशेष इति। वक्ष्यतइति। अनुमानखण्डे इति शेषः।

अणुद्वयणुकयोरतीन्द्रियत्वात्तत्रानुमानमभिलपति त्रसरेणुरिति। यद्यपि त्रसरेण्वाद्यात्मकस्यापि वायोर्गगनादीनाञ्चातीन्द्रियत्वात्तत्रानुमानस्य प्रमाणत्वं प्रदर्शयितुं युक्तं न केवलमणुद्वयणुकयोस्तथापि पृथिव्यादिचतुष्टयस्यैवाणुद्वयणुकयोः सत्त्वात् प्रथमतस्तयोरेवानुमानमभिहितम्। अतएवोत्तरग्रन्थे 'आकाशवायू' इत्यादिना तेषामनुमेयत्वं वक्ष्यति। त्रसरेण्वाद्यन्त्यावयव्यन्तेषु द्रव्येषु प्रत्यक्षस्यैव प्रमाणत्वात्त्रसरेणोः पक्षतयोल्लेखः। त्रसरेणुश्च जालसूर्य्यमरीचिस्थो दृश्यते महत्त्वोद्भूतरूपवत्त्वादिति भावः। सावयवद्रव्यारब्ध इति। सावयवत्वमवयवसमवेतत्वमवयवत्वञ्च द्रव्यसमवायिकारणत्वम्। द्रव्यारब्धत्वञ्च द्रव्यनिष्ठसमवायिकारणतानिरूपितद्रव्यनिष्ठकार्य्यतावत्त्वम्। द्रव्यारब्धत्वस्य साध्यत्वेऽर्थान्तरं स्यादतः सावयवेति। सावयवत्वस्य साध्यत्वे परमाणुसिद्धिर्नस्यादतो द्रव्यारब्धेति। सावयवारब्धत्वस्याद्रव्ये वाधाद्द्रव्येति। वस्तुतस्तु सावयवत्वस्य वा द्रव्यारब्धत्वस्य वा सावयवारब्धत्वस्यवाऽभाववति परमाण्वादौ हेत्वधिकरणताया असत्त्वाद्व्यभिचाराप्रसक्तेस्तत्तन्मात्रस्य साध्यत्वे व्यर्थविशेषणत्वं दोष इति न शङ्क्यं साध्यांशे व्यर्थविशेषणताया अदोषत्वादिति ध्येयम्।

बहिरिन्द्रियवेद्यद्रव्यत्वादिति। मनोभिन्नेन्द्रियग्राह्यद्रव्यत्वादित्यर्थः। आत्मनि व्यभिचारवारणाय बहिः पदम्। रूपादौ व्यभिचारवारणाय द्रव्यपदम्। न च

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रूपादौ द्रव्यारब्धत्वमस्त्विति वाच्यं रूपादेर्गुणत्वेन स्वसमवायिनिष्ठ-स्वसजातीय-गुणारब्धत्वनियमात्। अतएव कणादसूत्रम् 'द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम्' 'द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्' इति। पक्षहेतुसाध्यान् प्रदर्श्य दृष्टान्तं प्रदर्शयितुमुदाहरणमुपन्यस्यति वहिरिन्द्रियवेद्यं यदित्यादि। उदाहरण-घटकविधयैव दृष्टान्तोपन्यासस्य सम्भवादिति भावः। पक्षहेतुसाध्यदृष्टान्तज्ञान-साध्यमित्युक्तं, तत्र के पक्षादय इत्याकांक्षायां तान्निर्द्दिशति अत्र त्रसरेणुः पक्ष इत्यादि।

त्रसरेणुपक्षकोक्तानुमानेन सिद्धं कण्ठतोऽभिदधाति अनेनेत्यादि। सिध्यतीति। सिद्धिरनुमितिस्तद्विषय इत्यर्थः। साध्यघटकसावयवद्रव्यत्वेन द्वयणुकस्य तदवयवत्वेन च परमाणोः सिद्धिरिति भावः ॥८॥

## ॥ तर्कामृतम् ॥

आकाशवायू शब्देन स्पर्शेन चानुमीयेते। शब्दो द्रव्याश्रितो गुणत्वात् यथा घट-रूपम्। अनेन द्रव्यान्तरवाधात् शब्दाश्रयत्वेनाकाशं सिध्यति। पृथिव्यादित्रयावृत्तिरयं स्पर्शो द्रव्याश्रितो गुणत्वादित्यनुमानेन द्रव्यान्तरवाधात् स्पर्शाश्रयत्वेन वायुः सिध्यति ॥९॥

## ॥ विवृतिः ॥

पृथिव्यप्तेजसां सिद्धिप्रकारमभिधाय वाय्वाकाशयोरुद्भूतरूपादिराहित्येन प्रत्य-क्षस्य प्रमाणत्वासम्भवादनुमानसाध्यत्वं प्रदर्शयितुमाहाकाशवायू इति। यद्यप्यत्र 'अल्पस्वरतरं तत्र पूर्व्वम्' इत्यनुशासनाद्वायुशब्दस्य पूर्व्वनिपातः समुचितस्तथापि 'यच्चार्च्चितं द्वयोः' इति विशेषानुशासनाद्विभुत्वेनाकाशस्यार्च्चितत्वादाकाशशब्दः प्रागभिहित इति बोध्यम्। वायोः परमाण्वादिभेदसत्त्वेऽप्यप्रत्यक्षत्वान्नोक्तरीत्या सिद्धिः सम्भवतीत्यत्र वायोर्न्निवेशः। शब्देन स्पर्शेन चानुमीयेते इति। अत्र तृतीयार्थः प्रयोज्यत्वं, स्पर्शशब्दश्च विजातीयस्पर्शपरः। अतएवाग्रे पृथिव्यादित्रयावृत्तिः स्पर्शः पक्षतया प्रवेशितः। तथा च शब्द-विजातीयस्पर्शपाक्षिके येऽनुमिती तद्विषयीभूतावा-काशवायू इति समुदितार्थः। तेन तयोर्व्वाय्वाकाशानुमाने लिङ्गत्वासम्भवेऽपि न क्षतिः। तत्राकाशसाधकानुमानप्रकारमाह शब्दो द्रव्याश्रित इति। आश्रितत्वमात्रस्य साध्यत्वे सिद्धसाधनं स्यादतो द्रव्यपदम्। एतेनानुमानेन पृथिव्यादिसिद्धिः कथं न स्यादित्याशङ्कां निरसितुमाह द्रव्यान्तरबाधादिति। तथाहि शब्दस्याकारणगुणपूर्व्वक-प्रत्यक्षत्वात् क्षित्यप्तेजोवायुगुणत्वबाधः। न चात्राप्रयोजकत्वमिति वाच्यं शब्दो यदि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्पर्शवद्विशेषगुणः स्यात्तदा नारमन्दादिभेदेनानुभूयमानो न स्यादेकस्मिन्नवयविनि रूपादेर्वैचित्र्येणाननुभूतत्वादित्यनुकूलतर्कसम्भवात्। एवं विशेषगुणत्वात् कालदिङ्मनोगुणत्वस्य वहिरिन्द्रियग्राह्यत्वादात्मगुणत्वस्य च शब्दे वाधोऽज्ञेयः। तत्र कालादिगुणत्वाभावसाधने शब्दो यदि कालदिङ्मनोगुणः स्याद्विशेषगुणो न स्यादित्यनुकूलस्तर्कः। न च शब्दे विशेषगुणत्वाभाव दृष्ट इति वाच्यं चक्षुर्ग्रहणायोग्यवहिरिन्द्रियग्राह्यजातिमत्त्वेन तस्य विशेषगुणत्वसिद्धेः। आत्मगुणत्वाभावसाधने च शब्दो यद्यात्मगुणः स्यादहं सुखीत्यादिवदहं पूर्य्येऽहं शब्दवानित्यादिबुद्धिः स्यादित्यनुकूलस्तर्को वोध्यः। न च शुभ्रमाकाशं नीलं तम इत्यादि प्रतीतेः शुक्लादिरूपवत्त्वस्य गगणसाधर्म्यत्वे तस्य प्रत्यक्षप्रमाणमेयत्वमेव स्यात् किमनुमानप्रयासेनेति वाच्यं ऊद्ध्र्वं विच्छुरितानां शुक्लभास्वराणामरुणतेजसामुपलम्भनेन श्रुभ्रत्वस्य, तथा सुमेरुदक्षिणांशावस्थितेन्द्रनीलमणिमयशिखरविच्छुरितप्रभयाच नीलत्वस्य नभसि दूरत्वदोषेण भ्रमात्। शब्दाश्रयत्वेनेति। पारिशेष्यादित्यादिः। अथ पवनसाधकं विजातीयस्पर्शपक्षकमनुमानमभिनीयदर्शयति पृथिव्यादित्रयावृत्तिरयं स्पर्श इति। अपाकजानुष्णाशीतस्पर्श इत्यर्थः। एतदभिप्रायेणैवायमिति पदमुपात्तम्। पृथिवीस्पर्शस्य पाकजत्वाज्जलीयतैजसस्पर्शयोस्तु शीतोष्णत्वात्तत्परिचायकतैव पृथिव्यादित्रयावृत्तिरित्युक्तं सिद्धसाधनवारणाय। तत्र साध्यमाह द्रव्याश्रित इति। सिद्धसाधनवारणाय द्रव्येति। वाधादिवारणायाश्रित इति। द्रव्यान्तरवाधादिति। अनुभूयमानविजातीयस्पर्शस्योक्तानुमानेन द्रव्याश्रितत्व सिद्धौ तदाश्रस्य रूपराहित्यात्क्षित्यादित्रयात्मकत्वस्य स्पर्शवत्त्वाद्गगणादि पञ्चकात्मकत्वस्य च वाधाद्वाधात्मकस्याष्टद्रव्यातिरिक्तद्रव्यस्य सिद्धिरितिभावः। न च वायुः प्रत्यक्षः स्पर्शाश्रयत्वादित्यनुमानेन वायोः प्रत्यक्षप्रमाणसाध्यत्वसिद्धेरनुमानस्य तत्र प्रमाणत्वानुधावनं व्यर्थमिति वाच्यं उद्भूतरूपवत्त्वस्योपाधित्वात्। न च रूपाद्यन्तर्भावेण साध्याव्यापकत्वान्नास्योपाधित्वमितिवाच्यं पक्षधर्म्मवहिर्द्रव्यत्वावच्छिन्न साध्यव्यापकत्वेनोपाधित्वसम्भवात्। वायुः सिध्यतीति। विलक्षणशब्दधृत्यादिनापि वायुसिद्धिरितिबोध्यम् ॥ ६ ॥

## ॥ तर्कामृतम् ॥

काले प्रमाणं यथा—परत्वापरत्वे द्विविधे कालिके दैशिके च। परत्वोत्पत्तिश्च बहुतररविक्रियाविशिष्टशरीरज्ज्ञानात्। अपरत्वोत्पत्तिश्च स्वल्पतररविक्रियाविशिष्टशरीरज्ज्ञानात्। तत्परत्वं ज्येष्ठत्वमपरत्वं कनिष्ठत्वम्। तदनुमानं यथा—परत्वजनकं बहुतररविक्रियाविशिष्टशरीरज्ज्ञानमिदं परम्परासम्बन्धघटकसापेक्षं साक्षात्सम्बन्धाभावे सति विशिष्टज्ञानत्वाल्लोहितः स्फटिक इति प्रत्ययवत्। परम्परासम्बन्धश्च



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वसमवायिसंयुक्तसंयोगः। तेन सम्बन्धघटकः कालः सिध्यति। ननु कालस्य भूतभविष्यद्वर्त्तमानभेदेन बहुत्वात् कुत एकत्वमिति चेन्न उपाधिभेदेन भेदप्रत्ययात्। कालोपाधयो रविक्रियादिरूपा भिन्ना एव॥ १०॥

॥ विवृत्तिः॥

अथ भावेषु क्रमप्राप्तस्याप्रत्यक्षस्य कालस्यानुमानसाध्यात्वमुपादपितुं भूमिकामारचयन्नाह परत्वापरत्वे इत्यादि। द्विविधयोरपितयोरग्रे विभागस्यावक्ष्यमाणत्वान्न्यूनत्वं परिहर्त्तुमत्रैव प्रसङ्गतो विभागमाह द्विविधे इति। विद्याद्वयं दर्शयति कालिके दैशिकं चेति। कालिके कालनियन्त्रिते। दैशिके—दिङ् नियन्त्रिते। कालसाधकवक्ष्यमाणानुमाने पक्षीभूतस्य परत्वोत्पादकतयाभ्युपेयत्वमाह परत्वोत्पत्तिश्चेत्यादि। कालिकेत्यादिः। उत्पन्नौ निमित्तमाह बहुतरेत्यादि। रविक्रिया-मार्त्तण्डपरिस्पन्दः। तथा च बहुतरमार्त्तण्डपरिस्पन्दान्तरितजन्मनि वृद्धशरीरे बालकशरीरमवधिं कृत्वा यत् परत्वमुत्पद्यते तत्र तादृशपरिस्पन्दविशिष्ट वृद्धशरीरज्ञानं निमित्ताकारणमित्यर्थः। वक्ष्यमाणरीत्या विनिगमनाविरहेणापरत्वोत्पादकतयापि पक्षस्याभ्युपेयतां सूचपितुमाहापरत्वोत्पन्निश्चेति। कालिकेत्यादिः उत्पन्नौ निमित्तमाह स्वल्पतरेति। तथाच स्वल्पतरमार्तण्डपरिस्पन्दान्तरितजन्मनि बालकशरीरे वृद्धशरीरमवधिं कृत्वा यदपरत्वमुत्पद्यते तत्रतादृशपरिस्पन्दविशिष्टबालकशरीरज्ञानं निमित्ताकारणमित्यर्थः। यथा घटाद्युत्पन्नौ कपालादिज्ञानस्य निमित्ताकारणत्वं तथेतिभावः। तत् परत्वमिति। द्विविधपरत्वयोर्म्मध्ये कालिकपरत्वमित्यर्थः। ज्येष्ठत्वमिति। वृद्धादिशरीरनिष्ठमितिभावः। ज्येष्ठत्वं प्रति समवायिकारणं स्थविरादिशरीरमसमवायिकारणं कालशरीरसंयोगो निमित्ताकारणन्त्वपेक्षाबुद्ध्यदिकम्। अपेक्षाबुद्धिस्तु ज्येष्ठत्वोत्पन्नावपेक्षितबहुतररविक्रियावच्छिन्नशरीरज्ञानरूपकारणघटकीभूतबहुतरत्वजनिका ग्राह्या। तादृशापेक्षाबुद्धिनाशाच्चज्येष्ठत्वनाशः। एवं कनिष्ठत्वं प्रतिसमवायिकारणं बालकादि शरीरमसमवायिकारणं कालतच्छरीरसंयोगो निमित्ताकारणन्त्वपेक्षाबुद्ध्यादिकम्। अपेक्षाबुद्धिश्च कनिष्ठत्वोत्पन्नावपेक्षितस्वल्पतररविक्रियावच्छिन्नशरीरज्ञानरूपकारणघटकीभूतस्वल्पतरत्वजनिका ग्राह्या। तादृशापेक्षाबुद्धिनाशाच्चकनिष्ठत्वनाशः। तदुक्तं परत्वापरत्वप्रकरणे विश्वनाथेन 'अपेक्षाबुद्धिनाशाच्च नाशस्तेषामुदाहृतः' इति। एवं तत्परत्वमित्यत्रापि।

भावकार्य्यत्वात् कालिकपरत्वापरत्वयोः कुत्रचिदसमवायिकारणत्वभुपेयम्। तत्र नतावन्मार्त्तण्डपरिस्पन्दानां तत्त्वं, तेषां मार्त्तण्डसमवेतत्वेन व्यधिकरणत्वात्। नापि रूपादीनां तत्त्वं, व्यभिचारात्। अतः पारिशेष्यान्मार्त्तण्डपरिस्पन्दावच्छिन्नद्र-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

व्यसंयोगस्यैवतदसमवायिकारणत्वं वाच्यम् । तच्चद्रव्यं न मार्त्तण्डरूपं नवा पृथिव्याद्यात्मकं भवितुमर्हति भूर्त्तत्वात् । न चाकाशमात्मा वा तद्दव्यमस्त्वितिवाच्यं तयोर्व्विशेषगुणवत्त्वात् । नापि दिक् तथा सम्भवति, तस्या दैशिकपरत्वापरत्वासमवायिकारणसंयोगाश्रयत्वेन सिद्धेः । अतः पारिशेष्यात् कालिकपरत्वापरत्वाश्रयोभूतेन शरीरेण सह संयुक्तस्य कालस्यैव तथाविध (मार्त्तण्डपरिपस्न्दावच्छिन्न-) द्रव्यत्वं सिद्धमित्येतावदर्थजातं मनसिकृत्य कालसाधकानुभानप्रकारं दर्शयति परत्वजनकमित्यादि । अवधिमनपेक्ष्यजायमाने सामान्यतो बहुतररविक्रियाविशिष्टशरीरज्ञाने बाधासिध्यो र्वारणाय पक्षे परत्वजनकमिति विशेषणम् । स्वल्पतररविक्रियावच्छिन्नशरीरज्ञाने आश्रयासिभिवारणाय बहुतरक्रियान्तरावच्छिन्नशरीरज्ञानेआश्रयासिद्धं-वारयितुं रवीति । यद्यपि मूर्त्तमात्र एव परत्वमुत्पद्यते तथापि शरीर एव मुख्यतया ज्येष्ठत्वव्यवहाराच्छरीरेति । तादृशशरीरविषयकद्वेषादाश्रयासिद्ध्याहे र्व्वारणायज्ञानेति । विशिष्टज्ञानत्वमात्रस्य घटज्ञानादौ सत्त्वाद्व्यभिचारः स्यादतो विशेष्यदलम् । ज्येष्ठत्वस्याननुगतस्य तत्तच्छरीर निष्ठत्वादिदमित्यनेन पक्षनिर्द्देशोज्ञाज्ञानमित्त्यत्तन्तु परिचायकमितिवोध्यम् । साध्यमाहपरम्परेत्यादि । साक्षात्सम्वधत्वं नाम संयोगाद्यन्यतमत्वम्, तदभाववत्त्वेसति सम्ब्रन्धत्वं परम्परासम्वन्धत्वम् । न च स्वसमवायिसंयुक्तसंयोगस्य वक्ष्यमाणस्य कथं परम्परासम्वन्धत्वं घटते तत्रसंयोगे संयोगाद्यन्यतमत्वसत्त्वेन साक्षत्सम्बन्धत्वसत्त्वादितिवाच्यं तत्रसंयोगत्वेन न संसर्गता किन्तु स्वसममवायिसंयोगत्वरूपविलक्षणधर्म्मेणेत्यदोषात् । घटकसापेक्षमिनि । तत्त्वञ्च तादृशघटकं विनाऽनुपपद्यमानत्वम् । हेतुमाह साक्षादित्यादि । साक्षात् सम्बन्धेन विशिष्टज्ञाने व्यभिचारवारणाय सत्यन्नम् । निर्व्विकल्पके व्यभिचारवारणाय विशिष्टज्ञानत्वादिति । किञ्चिन्निष्ठप्रकारतानिरूपितकिञ्चिन्निष्ठविशेष्यता शालिज्ञानत्वादित्यर्थः । दृष्टान्तं दर्शयति लोहितेत्यादि । अत्र स्फटिके लौहित्यस्य साक्षात् सम्बन्धाभावात् स्वसमवायिसंयोगात्मकः परम्परासम्वन्धो वाच्यः । ततश्च स्वसमवायित्वेन जवाकुसुमादेः सिद्धिरितिभावः । परम्परासम्वन्धघटकसापेक्षमित्युक्तम्, तत्र कस्तावत् परम्परासम्बन्धो वाच्य इत्याकांक्षायामाह परम्परासम्वन्धश्चेत्यादि । स्वसमवायीत्यादि । स्वं—तथाविधमार्त्तानुपरिस्पन्दः, तत्समवायी मार्त्तण्डः, तत्संयुक्तःकालः, तत्संयोगस्तथाविधभावः । वस्तुतस्तु ज्येष्ठत्वकनिष्ठत्वरूपपरत्वापरत्वेऽसमवायिकारणजन्ये भावकार्य्यत्वाद्रपादिवदित्याद्यनुमानतोऽपि कालपिण्ड (शरीर) संयोगेस्त्र तदसमवायिकारणत्वाधात् कालस्य सिद्धिरिति ध्येयम् ।

कालत्वस्योपाधित्वमुक्तं, तस्य जातित्वाभावे एकव्यक्तिवृत्तिकत्वं हेतुर्व्वाच्यस्तत्राशङ्कते नन्विति । भूतेनि । तत्र तदवच्छिन्नकालत्वं तद्वर्त्तमानकालत्वम् । तत्प्राग-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भावावच्छिन्नकालत्वं तद्भविष्यत्कालत्वम्। तद्ध्वंसावच्छिन्नकालत्वं तद्भूतकालत्वम् शङ्कां निरस्यति नेति। उपाधिभेदेनेति। यथाकाशस्यैकत्वेऽपि घटाकाशं पटाकाशमित्यादिव्यवहारो घटपठाद्यात्मकोपाधिभेदात् कथञ्चिदुपपादनीयस्तथाकालेऽपीतिभावः। अत्रके तावद् भेदका उपाधय इत्याकाक्षायामाह रविक्रियादीति। स्वकीयवर्त्तमानातीतभविष्यत्कालेषु स्व-स्वध्वंस-स्वप्रागभावावच्छिन्नमार्त्तण्डपरिस्पन्दनामिव स्व-स्वध्वंस-स्वप्रागभावानामप्युपाधित्वं सम्भवतीत्याशयेनोक्तमादिपदम्। तेन विभाग-प्रागभावादेरप्युपग्रहः। तथाच स्वजन्यविभागप्रागभावावच्छिन्नमार्त्ताण्डपरिस्पन्दस्येव स्वजन्यविभागप्रागभावस्य पूर्व्वसंयोगावच्छिन्न विभागस्य वाद्यक्षणोपाधित्वं संगच्छते। एवमन्यत्राप्यूह्यम्॥ १०॥

॥ तर्कामृतम्॥

एवं दैशिकपरत्वापरत्वभ्यां दिशः सिद्धिः। ते च दूरत्वसमीपत्वे। अवधिसापेक्ष-बहुतरसंयोगविशिष्टशरीर ज्ञानमिदं परत्वजनकं परम्परासम्वन्धघटकसापेक्षमित्यादि पूर्व्ववत्। तेन च दिशः सिद्धिः। न चाकाशमेव सम्बन्धघटकमास्तामिति वाच्यं तस्य शब्दाश्रयत्वेनैव धर्म्मिग्राहकप्रमाण सिद्धत्वात् न रविक्रियाद्युपनायकत्वसम्भवः॥११॥

॥ विवृत्तिः॥

अथ नियत परत्वाभ्यां कालमनुमाय दिशमप्यनुमानतो निरूपयितुमवतारयति एवं दैशिकपरत्वापरत्वाभ्यामिति। अनियताभ्यामिति भावः। दैशिकपरत्वोत्पत्तौ मूर्त्तसंयोगभूयस्त्वज्ञानमिव भूयः संयोगविशिष्टमूर्त्तज्ञानमपि निमित्तकारणम्। अतएव बहुतरसंयोगविशिष्टशरीरज्ञानस्य पक्षत्वं वक्ष्यति। एवं दैशिकापरत्वोत्पत्तौ मूर्त्तसंयोगाल्पीयस्त्वज्ञानमिवाल्पसंयोगविशिष्टमूर्त्तज्ञानमपि निमित्तकारणं बोध्यम्। तथाहि पाटलीपुत्राद्द यावत् संख्यकैर्म्मूर्त्तसंयोगैः काशी प्राप्यते ततोऽधिकमूर्त्त संयोगैः प्रयागः प्राप्यतेऽतः पाटलीपुत्रात् काशीमपेक्ष्य प्रयागः पर इति व्यवह्नियते। तत्र पाटलीपुत्रमवधिकृत्वा बहुतरमूर्त्तसंयोगान्तरिते प्रयागे काश्यपेक्षया परत्यमुत्पद्यते, तच्च दूरत्वरूपम्। एवं पाटलीपुत्राद्द यावत् संख्यकैर्म्मूर्त्तसंयोगैः कुरुक्षेत्रं प्राप्यते ततोऽल्पसंख्यकैर्म्मूर्त्तसंयोगैः प्रयागः प्राप्यतेऽतः पाटलीपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति व्यवह्लियते। तत्र पाटलीपुत्रमवधिं कृत्वाल्पतर मूर्त्त संयोगान्तरिते प्रयागे कुरुक्षेत्रापेक्ष्ययाऽपरत्वमुत्पद्यते, तच्च सामीप्यरूपम्। अतएवोक्तं ते च दूरत्वसमीपत्वे इति। तयोर्जन्यभावतया सा समवायिकारणकत्वस्योपेतव्यत्वात् तदसमवायित्वस्य च मूर्त्तसंयुक्तदिक्संयोगानन्यत्र वाधाद्दिक्संयोगसिद्ध्या दिशः सिद्धि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रित्याशयेन दिक्साधकानुमानप्रकारमाह-परत्वजनकमवधिसापेक्षेत्यादि । अवधिं विना दूरत्वसामीप्ययोरनुपपद्यमानत्वात् पक्षतावच्छेदककोटाववधिसापेक्षत्व प्रवेशः । अवधिसापेक्षत्वभवधिं विनाऽनुपपद्यभानत्वम् । परार्थानुमानस्य न्यायसाध्यत्वान्न्यायस्य च पक्षनिर्देशं विनाऽसम्भवादिदमित्यन्तेन पक्षनिर्देशः । दूरत्वं प्रति प्रयागादिकं मूर्त्तं समवायिकारणं, मूर्त्तदिक् संयोगोऽसमवायिकारणं, मूर्त्त-( शरीर- ) संयोग भूपरत्वज्ञानजनकीभूतापेक्षाबुद्ध्यादिकं निमित्तकारणं, तादृशापेक्षाबुद्धिनाशात्तद्परत्वनाशः । एवं समीपत्वं प्रति प्रयागादिमूर्त्तं समवायिकारणं, मूर्त्तदिक् संयोगोऽसमवायिकारणं, मूर्त्त (शरीर) संयोगाल्पतरत्वज्ञानजनकीभूतापेक्षात्वबुद्ध्यादिकं निमित्त कारणं, तादृशापेक्षाबुद्धिनाशात्तदपरत्व नाशः । विशिष्टज्ञानत्वस्य घटज्ञानादावपि सत्त्वादर्थान्तरूपत्तो स्तन्मात्रमुपेक्षितम् । सामान्यतो बहुतरसंयोगविशिष्ट शरीर ज्ञानमादाय बाधादिः स्यादतः परत्वजनकमिति पक्षविशेषणम् । साध्यमाह परम्परेत्यादि । हेतुश्च साक्षात् सम्बन्धाभावे सति विशिष्ट ज्ञानत्वमिति सूचयितुमुक्तं पूर्व्ववदिति । मूर्त्तेन सह स्वकीयसंयोगमालम्ब्य दिशा दूरस्थे समीपस्थे च देशे परत्वस्यापरत्वस्य चोत्पाद्यमानत्वाद्दिशोऽन्यत्र तयोरूपनायकत्वासम्भवादत्रापि स्वसमवायिसंयुक्तसंयोगः परम्परासम्बन्धत्वेनोपादेयः । स्वं —अवधिसंयुक्तमूर्त्तप्रतियोगिकः संयोगः, तत् समवायिमूर्त्तं (शरीरं) तत् संयुक्ता दिक्, तत्संयोगः दूरस्थे समीपस्थे च देशे जायते । तथाच स्वसमवायिसंयुक्तत्वेन दिशः दिद्धिरिति मनसि कृत्वाह तेन चेत्यादि । न च पूर्व्वत्र स्वसमवायि संयुक्तत्वेन दिशोऽत्र च कालस्य सिद्धिः स्यादिति वाच्यं दिशो रविक्रियोपनायकतायाः कालस्य च संयोग विशेषोपनायकताया असिद्धत्वात् क्रियोपनायकः कालः संयोगविशेषोपनायिका दिगित्यस्यैव युक्तत्वात् । ननु कालस्य दिशश्चेवाकाशस्यापि विभुत्वाद्विनिगमकाभावेनोभयत्राकाशस्यैव स्वसमवायि संयुक्तत्वेन सिद्धिः स्यादित्याशङ्कते न चेति । शङ्कां निरस्याति तस्येत्यादि । आकाशस्येत्यर्थः । शब्दाश्रयत्वेनेत्यदि । शब्दो द्रव्याश्रितो गुणत्वादिति प्रोक्तं यद्धर्म्मिणः— आकाशस्य साधकमनुमानं तेन शब्दाश्रयत्वपुरष्कारेणैवाकाशस्य सिद्धत्वादिति भावः । ननु शब्दाश्रयत्वेन सिद्धस्याकाशस्य स्वसमवायिसंयुक्तत्वेन सिद्धौ का बाधा इत्यत आह न रविक्रियादीति । रविक्रियापदं कालिकपरत्वापरत्वाभिप्रायेण । आदि पदञ्च दैशिकपदत्वापरत्वाभिप्रायेण । तेन मूर्त्तसंयोगस्योपग्रहः । उपनायकत्वमिति । उपनीतभाननियामकत्वमित्यर्थः । वस्तुतस्त्विदमुपलक्षणं पूर्व्वत्र स्वसमवायिसंयुक्तत्वेनाकाशस्य सिद्धत्वे क्वचिद् भेरीदण्डसंयोगे स्वसंयुक्तासु स्वसमानकालीनासु यावतीषु भेरीषु युगपच्छब्दोत्पादप्रसङ्गो यतो दृश्यते हि स्वसमवायिरविचरमसंयोगाश्रय शरीरैतदुभयसंयुक्तः कालः स्वसंयुक्तेषु स्वसमानकालीनेषु यावत्सु शरीरेषु युगपत्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परत्वापरत्वे जनयतीति। एवं परत्र स्वसमवायिसंयुक्तत्वेनाकाशस्य सिद्धत्वेऽनियत परधर्म्मोपनायकतापत्तिः किन्त्वात्मनामपि विनिगमना विरहेण तत्तद्रूपेण सिद्ध्यापत्त्या गौरव प्रसङ्ग स्तेषामनन्तत्वादिति ध्येयम्। सा दिगेकाप्युपाधिभेदात् प्राची प्रतीची-त्यादिव्यवहारविषयतामाप्नोति। तत्रोदयगिरिसन्निहितमूर्त्तसंयोगावच्छिन्नादिक् प्राची। उदयगिरिव्यवहितमूर्त्तसंयोगावच्छिन्ना दिक् प्रतीची। सुमेरुसन्निहित मूर्त्त संयोग-वच्छिन्नादिगुदीची। तद्व्यवहृति मूर्त्तसंयोगावच्छिन्ना दिगवाचीत्यादि ज्ञेयम्॥ ११॥

## ॥ तर्कामृतम् ॥

अहं सुखीत्यादि प्रत्यक्षमात्मानि प्रमाणं। ईश्वरे चानुमानं यथा—क्षितिः सकर्तृका कार्य्यत्वाद् घटवत्। तेनेश्वरस्य तद्वृत्तिनित्यज्ञानेच्छाकृतीनां तत् सार्व्वज्ञ्यस्य च सिद्धिः। मनसि प्रमाणं यथा—सुखादिप्रत्यक्षमिन्द्रियजन्यं जन्य-प्रत्यक्षत्वात् घटप्रत्यक्षवत्। तथा चेन्द्रियान्तरवाधे मनसः सिद्धिः॥ १२॥

## ॥ विवृतिः ॥

यद्यपि सुखं द्रव्यसमवेतं गुणत्वाद् रूपवदित्याद्यनुमानतोऽष्टद्रव्यसमवेतत्ववाधा-दष्टद्रव्यातिरिक्तस्यजीवात्मनः सिद्धिः सम्भवति तथापि सर्व्वप्रमाणवलवतः प्रत्यक्षस्य तत्र प्रमाणत्वसम्भवे तदाश्रयणमेवोचितमित्याशयेनाहाहं सुखीत्यादि। विशेष-गुणसम्वन्धादेवात्मनः प्रत्यक्षत्वनियमात् सुखाद्यप्रकारिकायाः केवलाहमित्या-कारिकाया एकत्वप्रकारकाहन्त्वावच्छिन्न विशेष्यकप्रतीतेरात्मप्रमाणत्वासम्भवादिति भावः। विनिगमनाविरहादुःखत्वाद्यवच्छिन्नप्रकारकप्रतीतेरप्यात्म प्रमाणत्वसम्भव इत्याशयेनोक्तमादीति। प्रत्यक्षमिति। मानससाक्षात्कार इत्यर्थ। इदमुपलक्षणं, अहमित्यस्य प्रकृतिभूतं पदं सभिधेयं पदत्वाद् घटादिपदवदित्याद्यनुमानस्य "स आत्मा" इत्यादि श्रुतेः "अच्छेद्योऽयमदाह्योऽयम्" इत्यादि स्मृतेश्च जीवात्मानि प्रमाणत्वयवधेयम्। आत्मनीति। जीवात्मनीर्त्थः। न चोक्तप्रत्यक्षे शरीर मेव विशेष्यतया भासता मिति वाच्यं वहिरिन्द्रियव्यापारं विनापि जायमानोक्त-मानस प्रत्यक्षविषयत्वस्य शरीरेऽनुपपत्तेर्व्वाल्ये परिदृष्टस्य कौमारे स्मरणाद्यनुपपत्तेः कृतहानाकृताभ्यागमप्रसङ्गाच्च। न च नित्यं मन एव तथाभासतामिति वाच्यं स्वस्य स्वकरणकप्रत्यक्षप्रमेत्ववात् सुखादेरप्रत्यक्षत्वापत्तेश्च न च बहिरिन्द्रियाणां तथाभासमानत्वं कल्प्यमिति वाच्यं तथा सति चक्षुरादिसत्त्वदशायां गृहीतस्य वस्तुनोऽ-न्यत्वादि दशायां स्मरणानुपपत्तेरनुभवस्मरणयोः सामानाधिकरण्यप्रत्यासत्त्येव कार्य्य-कारण भावात्। अन्यथा तवानुभूते ममापि स्मरणं स्यात्। तदुक्तमाचार्य्यैः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"नैकदृष्टं स्मरत्यन्यः" इत्यादि । ननु शरीरस्यास्मत्पदार्थत्वविरहे 'स्थूलोऽहं गच्छामि' 'गौरोऽहमश्नामि' इत्यादि स्थूलत्वगमनाद्योः सामानाधिकरण्यावगाहिप्रतीतेः का गतिरिति चेन्न तत्रानायत्या स्थूलगौरपदयो गौंणार्थकत्वकल्पनात् । तथाहि स्थूलादिपदस्य स्थूलत्वाद्यवच्छिन्नदेहावच्छिन्नपरत्वान्नानुपपत्तिः । यदिदं प्रत्यक्षस्यात्मप्रमाणत्वमभिहितं तन्निज शरीरावच्छेदेनैव, परकीयशरीरावच्छेन तु तस्य प्रमाणत्वासम्भवाच्चैत्रशरीरप्रयत्नवदधिष्ठितं चेष्टावन्त्त्वाइ यन्नैवं तन्नैवमित्याद्यनुमानादात्मसिद्धिरिति ध्येयम् ।

उद्देशप्रकरणे ईश्वरस्य पृथगनुद्दष्टत्वेऽनैवोद्देशोबोध्यः । तदुक्तं शिवादित्येन "आत्मातु परमात्मा क्षेत्रज्ञश्चेति द्विविधः" इति । तथा च तस्य नीरूपद्रव्यत्वेन तत्र प्रत्यक्षप्रमाणप्रमेयत्वबाधादाह ईश्वरे चानुमानमिति । ईश्वरसाधकमनुमानमाभिनीय दर्शयति क्षितिरित्यादि । नात्र क्षितित्वस्य पक्षतावच्छेदकत्वमभिमतं तथा सत्यवच्छेदकावच्छेदेन साध्यसाधने परमाणौ बाधः सामानाधिकरण्येन तथात्वेपि घटादावंशतः सिद्धसाधनं प्रसज्येत किन्तु स्वरूपसम्बन्धविशेषात्मककार्य्यत्वस्य तथात्वं बोध्यम् । तेन जन्यक्षितित्वस्य पक्षतावच्छेदकत्व एव नोक्तातिप्रसङ्ग इत्यपास्तम् । तथात्वे क्षितित्वस्य पक्षतावच्छेदककोटिप्रवेशवैयर्थ्यप्रसङ्गात् परमाणुनभ्युपगमे जन्यपदभ्याव्यावर्त्तकतापत्तेश्च । सकर्त्तृकेति । कर्त्तृजन्येत्यर्थः । अत्र कर्त्तृत्वं न तावत् कृतिमत्त्वमात्रमुपादानज्ञानाद्यभाववतोऽपीष्टसाधनताज्ञानादिना प्रवृत्त्युत्पत्त्याबालादे र्घटादि कर्त्तृतापत्तेः किन्तूपादानगोचरापरोक्षज्ञानचिकीर्षा कृतिमत्त्वरूपम् । यद्यप्यत्रोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वस्य साध्यत्वे लाघवं कृत्याश्रयतयेश्वरसिद्धिश्च सम्भवति तथाप्युपादानज्ञानचिकीर्षाकृतीनामिव स्वतन्त्रान्वयव्यतिरेकाभ्यमुपादानज्ञानचिकीर्षाकृतिमतोऽपि हेतुत्वमित्याभिप्रायेण सकर्त्तृकत्वस्य साध्यतेतिबोध्या ।

वस्तुतस्तु कार्य्यंप्रत्युपादानज्ञानत्वादिप्रत्येकधर्म्मेण-कारणत्व स्यान्वयव्यतिरेक सिद्धत्वाद्विनिगमनाविरहाल्लाघवाच्चोपादानज्ञानजन्यत्वस्य चिकीर्षाजन्यत्वस्य कृतिजन्यत्वस्य च त्रितयस्यात्र साध्यता बोध्या । न चोपादानज्ञानचिकीर्षयोः प्रवृत्तिं प्रति हेतुत्वे कार्य्यसामान्यं प्रत्यहेतुत्वाइ व्यभिचार इति वाच्यं प्रवृत्तिद्वारा कार्य्य सामान्येऽप्युपादानज्ञानस्य चिकीर्षायाश्च हेतुत्वोपगमात् ।

नव्यास्तु लाघवतः कृतिजन्यत्वस्यैव साध्यत्वं, तथा च सर्गाद्यकालीनांकुरात्मकक्षितेरपि कृति जन्यत्वे सिद्धे तादृशांकुरकृतेश्चास्मदाद्याश्रितत्वबाधात्तदाश्रयत्वेनेश्वर सिद्धिरिति प्राहुः ।

वस्तुतस्तु सर्गाद्यकालीनद्यणुकारम्भकपरमाणुसंयोगजनकं कर्म्म चेतनप्रयत्न

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रयोज्यं कर्म्मत्वादादिशरीरप्रक्रियावदित्याद्यनुमानस्यापीश्वरसिद्धौ प्रमाणत्वं वेदितव्यम्। अतएव "कार्य्यायोजन घृत्यादेः पदात् प्रत्ययतः श्रुतेः। वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः" इत्याचार्य्याः।

हेतुमाह कार्य्यत्वादिति। भावत्वे सति प्रागभावप्रतियोगित्वादित्यर्थः। तेन ध्वंसे न व्यभिचारः। ईश्वरे चानुमानमित्यत्रानुमानमित्युपलक्षणम्। तेन "अज्ञो जन्तुरनीशोऽयमात्मनः सुखःदुःखयो। ईश्वर प्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा" इत्यादिश्रुतेः "ईश्वरः सर्व्वभूतानां हृद्देशेऽज्जुर्न। तिष्ठति" इत्यादि स्मृतेश्चेश्वरसिद्धिर्द्रष्टव्या।

स्वोक्तानुमानस्य फलमाह तेनेति। क्षितिपक्षकोक्तानुमानेनेत्यर्थः। उक्तानुमानेनेश्वरस्य सिद्धौ साध्यतावच्छेदकघटकीभूतकर्त्तृत्वघटकविधया तदीयनित्यज्ञानादेरपि सिद्धिरित्याह तद्वृत्तीति। ईश्वरवृत्तीत्यर्थः। ईश्वरीयज्ञानेच्छाकृतीनां ध्वंसप्रागभावादिकल्पनायां गौरवादाह नित्येति। ईश्वरज्ञानस्य कारणानियम्यत्वाद्विनिगमनाविरहेण सर्व्वविषयकत्वसिद्ध्येश्वरस्य सर्व्वज्ञत्वसिद्धिरित्याह तत्सार्व्वज्ञ्यस्येति।

अतोन्द्रियस्य मनसः प्रत्यक्षप्रमाणप्रमेयत्वबाधादनुमानसाध्यत्वं प्रतिपादयितुमाह मनसि प्रमाणमिति। तदनुमानमभिनीय दर्शयति सुखादीति। विनिगमनाविरहादिपदम्। तेन दुःखादेः परिग्रहः। प्रत्यक्षसामान्यस्य पक्षत्वे सिद्धसाधनान्मनसोऽसिद्धेश्च सुखादिविषयकत्वेन प्रत्यक्षस्य पक्षतया प्रवेशः। जन्यत्वमात्रस्य साध्यत्वे सिद्धसाधनादर्थान्तराच्चेन्द्रियेति। तथा च मनसोऽपीन्द्रियत्वाददोषः। ईश्वरीय प्रत्यक्षे व्यभिचारवारणाय हेतुतावच्छेदकघटकतया जन्यत्वप्रवेशः। घटादौ व्यभिचारवारणाय प्रत्यक्षेति। नन्विन्द्रियजन्यत्वसिद्धावपि चक्षुरादीनामेव कुतो न सिद्धिरिन्द्रियत्वादित्यत आह इन्द्रियान्तरबाधादिति। सुखादेरात्मगुणत्वेन बहिरिन्द्रियग्राह्यत्वासम्भवात् साध्यतावच्छेदकघटकेन्द्रियत्वे मनसः सिद्धिरिति भावः ॥१२॥

## ॥ तर्कामृतम् ॥

अथ द्रव्यनाशप्रक्रिया। द्रव्यनाशो द्विविधः। क्वचिदसमवायिकारणनाशात् क्वचित् समवायिकारणनाशाच्च। तत्राद्यो यथा परमाणुद्वयसंयोगनाशाद्द्व्यणुकनाशः। द्वितीयो यथा कपाल नाशाद् घटनाशः। घटनाश उभयतः सम्भवति ॥१३॥

## ॥ विवृतिः ॥

द्रव्याणामुत्पत्ति प्रक्रियायाः प्रागभिहितत्वान्नाशप्रक्रियाया अनभिधाने न्यूनत्वं स्यादत आह—अथद्रव्यनाशेति। जन्यद्रव्यनाशेत्यर्थः। तेन द्रव्यत्वावच्छेदेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नाशप्रतियोगित्वविरहेऽपि न क्षतिः। यद्यपि जन्यद्रव्यसामान्यस्यैवासमवायिकारण-नाशनाश्यत्वकल्पने लाघवान्न नाशद्वैविध्यं सम्भवति तथापि पटादौ तन्तुसंयोगनाशस्येव विनिगमकाभावात्तन्तुनाशस्यापि नाशकत्वमित्याशयेन द्वैविध्यमुक्तम्। विधाद्वयं दर्शयति क्वचिदसमवायीत्यादि। ननु समवाय्यसमवायीति क्रमेण पूर्व्वं कारणनिर्द्देशा-दत्र कथं वैपरीत्यमिति चेन्न परमाण्वात्मकसमवायिकरणस्य नित्यत्वेऽपिद्वयणुकनाशे समवायिकारणनाशनाश्यत्वस्य वक्तुमशक्यत्वात् जन्यद्रव्यनाशकतया प्राधान्यादसम-वायिकारणनाशस्य पूर्व्वं निर्द्देशात्। नवीनास्तु लाघवतः सर्व्वत्रैवासमवायि-कारणनाशत्वेन कार्य्यद्रव्यनाशत्वेन कार्य्यकारणभावं मन्यन्ते। असमवायिकारण-नाशजकार्य्यद्रव्यनाशमुदाहरति परमाणुद्वयेत्यादि। अत्र समवायिकारणस्य नित्य-त्वादिति भावः। द्वयपदं स्वरूपकीर्त्तनमात्रम्। समवायिकारणनाशजकार्य्यद्रव्य-नाशमुदाहुरति कपालनाशादिति। ननु यत्र समवायिकारणमप्यनित्यं तत्र कार्य्यंद्रव्य-नाशे विनिगमकाभावादुभयनाशयोरेव कारणत्वं वाच्यमित्याह घटनाश उभयत इति। समवायिकारणनाशादसमवायिकारणनाशाच्चेत्यर्थः। न चैवं मिथोव्यभिचाराद-नुगमासम्भवाच्च प्रत्येकमपि कारणं न स्यादिति वाच्यं निमित्तेतरकारणनाशत्वेन कारणत्वस्य वक्तव्यत्वात् तत्तन्नाशं प्रति तत्तन्नाशस्य करणत्वमिति रीत्या विशेषस्य कल्पयितुं शक्यत्वाच्च ॥१३॥

## ॥ तर्कामृतम् ॥

आकाशकालदिगात्मपरमाणवोऽवृत्तयः समवायश्च। पृथिव्यादिपञ्चानां भूत-त्वम्। पृथिवीजलतेजोवायुमनसां क्रियावत्त्वमूर्त्तत्वे। पृथिव्यप्तेजोवायवोद्रव्य-समवायिकारणानि। कालस्य कालिकसम्बन्धेन सर्व्वाधिकरणत्वम्। दिशो दैशिक-सम्बन्धेन सर्व्वाधिकरणत्वम्॥ १४॥

॥*॥ इतिद्रव्यनिरूपणम् ॥*॥

## ॥ विवृतिः ॥

अथ साधर्म्यं निरूपणेन द्रव्यविचारमुपसंहर्त्तुमाह—आकाशेत्यादि। समपरि-माणयो र्व्वस्तुनो र्म्मिथो वैशिष्ट्यधियः प्रमात्वेऽपि तत्राधाराधेयभावस्याननुभवा-दाधाराधेयभावं प्रत्याधाराधेययोः परिमाणतारतम्यस्य नियामकत्वमुपेयम्। एवञ्चा-काशकालात्मदिशां परममहत्परिमाणवत्त्वेन परमाणुनाञ्चानुपरिमाणवत्त्वेन तौल्या-दाधेयत्वं न सम्भवतीत्याहावृत्तय इति। संयोगसमवायान्यतरसम्बन्धावच्छिन्ना-धेयत्वसामान्याभाववन्त इत्यर्थः। तेन महाकालस्य कालिकसम्बन्धेनाकाशादिम-त्त्वेऽपि न क्षतिः। समवायश्चेति। अवृत्तिरिति विभक्ति विपरिणामेनान्वयः। तथा चैतेषामवृत्तित्वं साधर्म्यमितिभावः। एवं परत्रापि।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भूतत्वमिति। आत्मान्यत्वे सति विशेषगुणवत्त्वमित्यर्थ। अत्र भूतत्वसमानाधिकरणद्रव्यत्वापरजातिमत्त्वं विवक्षणीयम्। तेनोत्पत्तिकालावच्छिन्नघटादौ नाव्याप्तिः। क्रियावत्त्वमूर्त्तत्वे इति। साधर्म्ये इति शेषः। अत्र क्रियावत्त्वपदेन क्रियासामानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वरूपोऽर्थो विवक्षणीयः। तेनानुत्पन्नक्रिय पृथिव्यादौ नाव्याप्तिः। मूर्त्तत्वं परिच्छिन्नपरिमाणवत्त्वम्। तदपि तत् समानाधिकरणद्रव्त्वव्याप्यजातिमत्त्वरूपं विवक्षणीयम्। अन्यथाद्यक्षणावच्छिन्नघटादावव्याप्त्यापत्तेः। आकाशकालदिगात्ममनसां गुणसमवायिकारणत्वेपि नित्यत्वादिजातीयद्रव्ययोः समवायिसमवेतभावासिद्धश्चाह-पृथिव्यप्तेजोवायव इति। अन्त्यावयविभिन्ना इत्यादिः। तेनान्त्यावयविषु नाव्याप्तिः। गुणसमवायिकारणत्वस्याकाशादिसाधारणत्वादाहु—द्रव्येति। कालस्येत्यादि। संयोगेन मूर्त्तस्य समवायादिना द्रव्यत्वादेश्चकाले सत्त्वेऽपि न तेन तेन सम्बन्धेन सर्व्वाधिकरणत्वं सम्भवत्यत आह—कालिकसम्बन्धेनेति। कालिकविशेषणतासम्बन्धेनेत्यर्थः। सर्व्वाधिकरणत्वमित्यत्र सर्व्वपदं कालत्वावच्छिन्नेतरपरं। तेन काले कालाधिकरणत्वविरहेऽपि नाव्याप्तिः। न च जन्यमात्रस्यैव कालोपाधित्वाद् यथा श्रुतमेव सम्यगिति वाच्यं तथात्वेऽप्यष्टद्रव्यातिरिक्तद्रव्यात्मककालस्य स्वाधिकरणत्वविरहात्।

दिश इत्यादि। संयोगसमवायादिना सर्व्वाधिकरणत्वविरहादाह—दैशिकसम्बन्धेनेति। दिक्कृतविशेषणतासम्बन्धेनेत्यर्थः। सर्व्वाधिकरणत्वमिति। अत्रापि पूर्व्ववदर्थ ऊहनीयः॥२४॥

:॥ इतिद्रव्यनिरूपणविवृतिः ॥:

## ॥ तर्कामृतम् ॥

अथ गुणाः कथ्यन्ते। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्म्माधर्म्मशब्दाश्चतुर्विंशति गुणाः। तच्च रूपत्वादीनि सर्व्वाण्येव जातयः। रूपं पृथिवीजलतेजोवृत्ति। तच्च शुक्लकृष्णरक्तपीतिचित्रादिभेदेन बहुविधं पृथिवीवृत्ति। अभास्वरशुक्लरूपं जलवृत्ति। शुक्लभास्वरं तेजो वृत्ति। रसः पृथिवीजलवृत्तिः। तत्र मधुरलवणकटुतिक्ताम्लकषायभेदात् षड्विधो रसः पृथिव्याम्। जले मधुरएव रसः। गन्धो द्विविधः सुरभिरसुरभिश्च पृथिवीमात्रवृत्तिः। स्पर्शः पृथिव्यादिचतुष्टयवृत्तिः। स च त्रिविधः शीत उष्णश्चानुष्णाशीतश्च। अनुष्णाशीतस्पर्शो वायुपृथिव्योः। जले शीतः। तेजसि उष्णः॥२५॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ विवृतिः ॥

अथ गुणत्वेन गुणानामखिलद्रव्यसमवेतत्वाद्द्रव्याभिव्यङ्ग्यत्वाच्च द्रव्यनिरूपणानन्तरं गुणानुद्देष्टुं विभजितुञ्च प्रतिजानीतेऽथ गुणा इति। चतुर्विंशतिरिति। न च यागादिव्यापारतया सिद्धस्य कार्य्यसामान्यनिमित्तकारणस्यादृष्टस्यापह्नोतुमशक्यत्वात् कथं गुणानां चतुर्व्विंशतित्वमिति वाच्यं धर्म्माधर्म्मभेदेनादृष्टस्य द्वैविध्यादनुपपत्तिविरहात्। न चैवं रूपादिभेदानां शुक्लादीनां सत्त्वात् पुनश्चतुर्विंशतित्वानुपपत्तिरिति वाच्यं रूपत्वादिजात्या शुक्लादीनामैक्यात्। न चादृष्टत्वेन धर्म्माधर्म्मयोरप्यैकस्य वक्तुं शक्यतयाऽनुपपत्तितादवस्थ्यमिति वाच्यमदृष्टत्वस्य जातित्वासिद्धेः। वस्तुतस्तु गुणाश्चतुर्विंशति रित्यस्य गुणाश्चतुर्व्विंशतिगुणविभाजकजातिमन्त इत्यर्थान्न दोषोऽदृष्टपदाद्धर्म्मत्वादिप्रकारेण शाब्दबोधस्यैवानुभवसिद्धत्वात्तत्पदशक्यतावच्छेदकतयानुगतप्रतीतिविषयतावच्छेदकत्वादिना वा धर्म्मत्वादेरेव जातित्वसिद्धेरिति ध्येयम्। तथा चालस्यविरुचिलघुत्वादीनां गुणत्वे प्रमाणाभावान्न संख्याधिक्यमिति भावः। जातय इति। बाधकषट्काभावादनुगतप्रतीतिविषयतावच्छेकतया तत्तत्पदशक्यतावच्छेकत्वादिना वैतेषां जातित्वमिति भावः। तथाच रूपत्वादिजातिमत्त्वं रूपादिलघुलक्षणं बोध्यम्। अथ गुणानां साधर्म्म्यंवैधर्म्म्ये निरूपयितुं प्रथमोद्दिष्टरूपवत्त्वस्य पृथिव्यादित्रितयसाधर्म्म्यमाह रूपमित्यादि। कस्याश्चिदपि रूपव्यक्ते स्त्रितयवृत्तित्वाभावेऽपि रूपत्वेन त्रितयवृत्तित्वमिति ज्ञेयम्। एवमग्रेऽपि। तथाच रूपवत्त्वं त्रितयसाधर्म्यमिति भावः। अत्र च यस्य द्रव्यस्य यद्गुणवत्त्वं साधर्म्म्यं वक्ष्यति तदितरद्रव्यस्य तद्गुणवत्त्वं वैधर्म्म्यं ज्ञेयम्। न चाद्यक्षणावच्छेदेनैतेषु रूपवत्त्वाभावादव्याप्तिरितिवाच्यं रूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। एवमन्यत्रापि। रूपविभागमाह तच्च शुक्लेत्यादि। शुक्लत्वादयो रूपत्वव्याप्यजातिविशेषरूपाः प्रत्यक्षसिद्धाः। चित्रादीति। रूपस्य व्याप्यवृत्तित्वनियमादव्याप्यवृत्ति शुक्लादिसमुदायस्य चित्ररूपत्वासिद्ध्या चित्रपटादिप्रत्यक्षत्वानुपपत्तेश्चित्ररूपसिद्धिरिति भावः। आदिना नीलादेः परिग्रहः। जलादौ बहुरूपाभावादाह पृथिवीवृत्तीति। सामान्यतो रूपवत्त्वस्य साधर्म्म्यमुक्त्वा विशेष आह अभास्वरशुक्लरूपमिति। शुक्लरूपस्य पृथिवी तेजसोरपि सत्त्वादुक्तमभास्वरेति। शुक्लभास्वरमिति। पृथिवी जलयोर्व्यावृत्तये भास्वर मिति।

अथ क्रमप्राप्तरसवत्त्वं पृथिव्यादिद्वयसाध्यर्म्म्यमाह रस इत्यादि। रसं विभजते तत्र मधुरेत्यादि। मधुरत्वादीनि रसत्वव्याप्यजातिविशेषरूपाणि। षड्विध इति। रसनघ्राणत्वगिन्द्रियाणां द्रव्यग्रहणे सामार्थ्याभावाद्द्रव्यलौकिकरासनादेरप्रसिद्ध्या तदनुपपत्त्यनवकाशेन चित्ररसाद्यनङ्गीकारादित्याशयः। जले षड्विधरसा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भावादुक्तं पृथिव्यामिति। मधुर एवेत्येवकारेणाम्लादिव्यवच्छेदः। न च जम्बीरजलादावम्लादिरसस्यानुभवादव्याप्तिरिति वाच्यं तस्याश्रयौपाधिकत्वात्। अथ क्रमप्राप्तगन्धवत्त्वस्य पृथिवीसाधर्म्यतां प्रदर्शयितुं द्विविधस्यैव गन्धस्य पृथिवीवृत्तितया प्रथमत एव गन्धं विभजते गन्धो द्विविध इति। सुरभिरसुरभिश्चेति। सुरभित्वासुरभित्वे गन्धत्वव्याप्यजातिविशेषौ। नचासुरभित्वं सुरभित्वाभाव इति वाच्यं गन्धमृगादौ तस्य भावत्वेनानुभूयमानत्वात्। पृथिवीमात्रवृत्तरितिमात्रपदं जलादौ गन्धाभावात् सार्थकम्। न च पाषाणात्मकपृथिव्यां गन्धाभावादव्याप्तिरिति वाच्यं पाषाणभस्मनि गन्धोपलब्धेः पाषाणेऽपिगन्धसत्त्वादन्यथा भस्मनि गन्धाभावापत्तेः। न च भस्म द्रव्यान्तरमेवेति वाच्यं रसाद्यभावेन द्रव्यान्तरत्वासिद्धेः।

सामान्यतः स्पर्शवत्त्वस्य क्षित्यादिचतुष्टयसाधर्म्यमुक्त्वा स्पर्शं विभजते—स च त्रिविध इति। अत्र यद्यप्यनुष्णाशीतस्पर्शस्य साधर्म्यं चरमे प्रतिपादयितुमुचितं क्रमानुरोधान्नव्यापिद्रव्यद्वयसाधर्म्यत्वेन प्राधान्यमभिप्रेत्यादौ निरूपयत्यनुष्णाशीतस्पर्श इति। स च पृथिव्यां पाकजः पवने चापाकज इति विशेषः।

जले शीत इति। उष्णजले उष्णत्वप्रतीतेरौपाधिकतया न दोष इति बोध्यम्। तेजसि उष्ण इति। सुवर्णादिरूपे तेजसि पार्थिवस्पर्शेनाभिभवादुष्णस्पर्शस्यानुपलब्धिरिति नाव्याप्तिः ॥२५॥

## ॥ तर्कामृतम् ॥

संख्या परिमाणपृथकत्वसंयोगविभागा नव द्रव्यवृत्तयः। परत्वापरत्वे पृथिवीजलतेजोमनो वृत्तिनी। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नभावनाधर्म्माधर्म्मा आत्मवृत्तयः। गुरुत्वं पृथिवीजलवृत्ति। द्रवत्वं पृथिवीजलतेजोवृत्ति तद्द्विविधं नैमित्तिकं सांसिद्धिकञ्च। आद्यं पृथिवीतेजसोः। द्वितीयं जले। स्नेहो जलमात्रवृत्तिः। संस्कारः पृथिवीजलतेजोवाय्वात्ममनोवृत्तिः। स त्रिविधोवेगो भावानास्थितिस्थापकश्च। तत्र वेगः पृथिव्यादिचतुष्ट्यमनो वृत्तिः। द्वितीय आत्मवृत्तिः। तृतीयः पृथिव्यादिचतुष्टय वृत्तिः। शब्दो द्विविधो ध्वन्यात्मको वर्णात्मकश्चाकाशमात्रवृत्तिः ॥२६॥

## ॥ विवृतिः ॥

संख्यादिपञ्चकानां सकलद्रव्यवृत्तित्वादाह संख्येत्यादि। यद्यपि गुणानामाश्रयभेदभिन्नत्वात् संख्यादेर्न्नवद्रव्यवृत्तित्वं न सङ्गच्छते तथापि संख्यात्वादिना सकलद्रव्यवृत्तित्वाददोषः। अथ परत्वापरत्वयोर्म्मूर्त्तद्रव्यसाधर्म्यमाह' परत्वापरत्वे इत्यादि। अत्रापि दैशिककालिकभेदेन परत्वस्यापरत्वस्य च द्वैविध्याद्दैशिकपरत्वापरत्वयोर्द्देशनिष्ठत्वात् कालिकपरत्वापरत्वयोश्च शरीरनिष्ठत्वान्मनः प्रभृतेश्चादेशशरी-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्वाद् यथाश्रुतं न सङ्गच्छते तथापि तत्तद्देशस्थतदवच्छिन्नशरीरमनःप्रभृतिषु द्विविधपरत्वापरत्वयोरुत्पत्तौ बाधकाभावात्तथाव्यवहाराच्चनानुपपत्तिः। अथ बुद्ध्यादिमत्त्वस्यात्मसाधर्म्यमाह बुद्धिसुखेत्यादि। आत्मनो द्वैविध्यात् सुखदुःखद्वेष-भावनाधर्म्माणाञ्च परमात्मवृत्तित्वविरहाद्बुद्धीच्छाप्रयत्नानां जीवात्मपरमात्मोमय-साधर्म्यमितरेषान्तु जीवमात्रसाधर्म्यमिति बोध्यम्। सुवर्णादिरूपे तेजसि गुरु-त्वस्योपलभ्यमानत्वेऽपि तस्य पार्थिवभागोपष्टम्भकत्वादाह गुरुत्वं पृथिवीजलवृत्तीति। द्रवत्ववत्त्वस्य पृथिव्यादित्रितयसाधर्म्यमाह द्रवत्वमित्यादि। द्रवत्वं विभजते तद्द्वि-विधमिति। विधाद्वयं दर्शयति नैमित्तकमित्यादि। तत्र नैमित्तिकत्वमग्निसंयोगादि निमित्तविशेषजन्यत्वम्। सांसिद्धिकत्वञ्च जातिविशेषः। सामान्यतः साधर्म्य-मुक्त्वा विशेषत आहाद्यमिति। पृथिवीतेजसोरिति घृतसुवर्णाद्योर्व्वह्निसंयोगादिना द्रवत्वस्य प्रत्यक्षसिद्धत्वादिति भावः। द्वितीयमिति। सांसिद्धिकमित्यर्थः।

अथ स्नेहवत्त्वस्य जलसाधर्म्यमाह स्नेह इत्यादि। अत्रमात्रपदेन पृथिव्यादे-र्व्वच्छेदः। यत्तु घृतादिरूपपृथिव्यामपि स्नेहवत्त्वं तदपि जलीयमेव स्वतन्त्रान्वयव्य-तिरेकाभ्यां किन्तु प्रकृष्टत्वाद्दाहानुकूलमिति बोध्यम्।

अथ पृथिव्यादीनां संस्कारवत्त्वं साधर्म्यमाह संस्कारः पृथिवीत्यादि। संस्कारं विभजने स त्रिविध इति। विधात्रयं दर्शयति वेगइति। तत्र वेगत्वादयो जातिविशेषाः। मूर्त्तमात्रस्य वेगवत्त्वं साधर्म्यमाह तत्र वेगइति। द्वितीयइति। भावनाख्यः संस्कार इत्यर्थः। आत्मवृत्तिरिति। जीवात्मवृत्तिरित्यर्थः। तेनेश्वरे भावनाविरहेऽपिना-व्याप्तिः। तृतीय इति। स्थितिस्थापक इत्यर्थः। पृथिव्यादिचतुष्टयवृत्तिरिति। एतच्च प्राचां मतानुसारेण। नव्यास्तु स्थितिस्थापकस्य जलादिवृत्तित्वे मानाभावात् पृथिवीमात्रवृत्तित्वमिति प्राहुः।

शब्दसामान्यस्येव शब्दविशेषस्यापि आकाशमात्रनिष्ठत्वात् शब्दसामान्यस्य साध-र्म्यमनुत्क्वैवादौ विभजते शब्दो द्विविध इति। ध्वन्यात्मक इति। ध्वनित्ववर्णत्वे-शब्दत्वव्याप्यजातिविशेषौ। वर्णत्वव्याप्याः पुनः कत्वादिजातयोऽवगन्तव्याः। आकाशमात्रवृत्तिरिति। मात्रपदेन गगनान्यद्रव्यव्यवच्छेदः ॥२६॥

॥ तर्कामृतम् ॥

रूपरसगन्धस्पर्शस्नेहसांसिद्धिक वत्वशब्दबुद्धि-सुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्म-भावना विशेषगुणाः। संख्यापरिमाणपृथक्त्वसंयोगविभागगुरुत्वनैमित्तिकद्रवत्ववेग-स्थितिस्थापकाः सामान्यगुणाः ॥२७॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ विवृतिः ॥

अथ शिष्यबुद्धिवैशद्यार्थं विशेषगुणत्वेन सामान्यगुणत्वेन च गुणान् विभजते रूपरसेत्यादि। तत्र द्रव्यविभाजकोपाधिद्वयसमानाधिकरणवृत्तिगुणवृत्तिजातिमत्त्वं विशेषगुणत्वमित्यन्नम्भट्ठाः। सामान्यगुणान्निर्दिशति संस्थापरिमाणेत्यादि। सामागुणत्वञ्च तादृशजातिमद्भिन्नत्वे सति गुणत्वमिति ध्येयम् ॥२७॥

॥ तर्कामृतम् ॥

अथ नित्यगुणाः। जलतेजोवायुपरमाणुनां विशेषगुणाः परमाणुवृत्तिस्थितिस्थापकश्च विभूनां परमाणूनाञ्चैकत्वपरिमाणपृथक्त्वानि ईश्वरेच्छाज्ञानकृतयश्चनित्यगुणः ॥२८॥

॥ विवृतिः ॥

नित्यगुणान्निरूपयितुं प्रतिजानीतेऽथ नित्यगुणा इति। जलतेजोवायुपरमाणूनामिति जलादिद्व्यणुकादेर्न्नाप्यतयातन्नाशेन तदीयगुणानामपि नाशादनित्यत्वादुक्तं परमाणूनामिति। पार्थिवपरमाणोर्न्नित्यत्वेऽपि पाकेन तदीयविशेषगुणानां विनाशेनानित्यत्वमिति भावः। जलादिपरमाणुनिष्ठसंयोगमाद्यात्मकसामान्यगुणस्य विभागादिनश्यत्वेनानित्यत्वादुक्तं विशेषेति। यद्यपि जलादिपरमाणुनिष्ठैकात्वाद्यात्मकसामान्यगुणानामपि नित्यत्वमस्त्येव तथापि पार्थिवपरमाणुनिष्ठानामप्येतेषां पाकेन विनाशासम्भवान्नित्यत्वादेकोक्त्या परमाणुत्वेन सकलपरमाणूनुद्दिश्य पृथगमिधास्यतीन्यदोषः।

एकत्वेत्यादि। द्वित्वादि संख्याया अपेक्षाबुद्धिजन्यत्वेनानित्यत्वादुक्तमेकत्वेति। एकत्वाहीनामेतेषामाश्रयनाशनाश्यत्वनियमादत्राश्रयाणाञ्च नित्यत्वेन नाशासम्भवान्नित्यत्वमितिभावः। जीवेच्छादेः स्वोत्तरोत्पन्नस्वसजातीयगुणनाश्यत्वनियमादुक्तमीश्वरेति।

अत्र संयोगविभागयोः क्रियादिजन्यत्वान् परत्वापरत्वायोर्व्बुद्धिविशेषजन्यत्वात् सुखदुःखयोर्द्धर्म्माधर्म्मजनितत्वात् द्वेषस्य द्विष्टसाधनताज्ञानजनितत्वाद्वेगस्य कर्म्मादिहेतुकत्वाद् भावनाया अनुभवेन धर्म्माधर्म्मयोर्व्विहितनिषिद्धकर्म्मभ्यां शब्दस्याभिधातादिना जन्यबुद्ध्यादेश्चात्ममनोयोगादिना जातत्वानित्यत्वं न सम्भवतीति बोध्यम् ॥२८॥

॥ तर्कामृतम् ॥

अथाप्रत्यक्षगुणाः। गुरुत्वधर्म्माधर्म्मभावनास्थितिस्थापकाः परमाणुद्व्यणुकवृत्तिगुणा अतीन्द्रियवृत्तिसामान्यगुणात्त्रसरेणो रूपं विहायान्ये गुणा अतीन्द्रियाः ॥२९॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ विवृत्तिः ॥

:नित्यगुणान्निरूप्याप्रत्यक्षगुणान्निरूपयितुमाहाथया प्रत्यक्षगुणाइति। अत्राप्रत्यक्षत्वं न पत्यक्षविषयत्वसामान्याभावो गुरुत्वादीनामलौकिकप्रत्यक्षविषत्वादव्याप्तेः किन्तु लौकिकप्रत्यक्षविषत्वरूपं बोध्यम्। प्रयोजकलाघवादादौ गुरुत्वादीनामप्रत्यक्षत्वमभिधन्ने गुरुत्वेत्यादि। अत्र गुरुत्वादिपञ्चानामप्रत्यक्षत्वे उद्भूतत्वाभावः प्रयोजकः। महद्वृत्तित्वाभावात् परमाणुद्वचणुकवृत्तिगुणानामप्रत्यक्षत्वमित्यतआह परमाणुद्वचणुकवृत्तिगुणा इति। यद्यपि परमाणुद्व्यणुकवृत्तिगुणानामपि वक्ष्यमाणातीन्द्रियवृत्तिगुणत्वेनोपग्रहस्नेहप्रत्यक्षे आश्रयाप्रत्यक्षत्वस्य हेतुत्वकल्पनञ्च सम्भवति तथापि महद्वृत्तित्वाभावस्यापि अप्रत्यक्षत्वप्रयोजकत्वाविष्कर्त्तुं परमाणुकद्वचणुकवृत्तिगुणानां पृथगुपादानं कृतमिति ध्येयम्। अतीन्द्रियवृत्तिसामान्यगुणा इति। अत्रातीन्द्रियत्वं वहिरिन्द्रियजन्यप्रत्यक्षाविषयत्वं नत्विन्द्रियकरणकप्रत्यक्षाविषयत्वरूपमन्यथामात्मनो मानसप्रत्यक्षविषयत्वादात्मगनसामान्यगुणानाञ्च तथात्वादव्याप्तिः स्यात्। शब्दबुद्ध्यादिष्वव्याप्तिवारणाय सामान्यपदम्। त्रसरेणुवृत्तिरूपस्य महद्वृत्तित्वविशिष्टोद्भूतत्वसत्त्वात् प्रत्यक्षत्वादाह त्रसरेणुरूपं विहायेति। अन्येगुणा इति। त्रसरेणुवृत्तिरसादय इत्यर्थः। न च महद्वृत्तित्वस्य तुल्यत्वाद्रूपस्येव रसादेः प्रत्यक्षं तत्र कथं न स्यादिति वाच्यं रूपप्रत्यक्षे महद्वृत्तित्वस्य रसादिप्रत्यक्षे च त्र्यणुकव्यावृत्तमहद्वृत्तित्वस्य कारणत्वात्। न च रसादिप्रत्यक्षकारणतावच्छेदककोटौ त्र्यणुकव्यावृत्तत्वनिवेशोऽप्रामाणिक इति वाच्यं अणुकवृत्तिरसाद्यप्रत्यक्षत्वानुभवस्यैव तत्रमानत्वात्। इहमुपलक्षणं जीवनयोनियत्नस्याप्यतीन्द्रियत्वं बोध्यम् ॥२६॥

॥ तर्कामृतम् ॥

रूपरसगन्धस्पर्शस्नेहप्रत्यक्षे महद्वृत्त्वित्रिन्वे सत्युद्भूतत्वं प्रयोजकम्। सायान्यगुणप्रत्यक्षे त्वाश्रयप्रत्यक्षम्। बुद्धिप्रत्यक्षे स्ववृत्तिविशिष्टज्ञानत्वम्। सुखादिप्रत्यक्षे स्ववृत्तिसुखत्वादिकमेव। अन्त्याद्यशब्दौ विहाय सर्व्वशब्दः प्रत्यक्षः ॥२०॥

॥ विवृतिः ॥

येषां गुणानामप्रत्यक्षत्वमभिहितं तदितरगुणानामवश्यं प्रत्यक्षत्वं वाच्यं, तत्र च प्रत्यक्षे प्रयोजकं किमित्याकांक्षायामाह रूपेत्यादि। रूपादीनामेषां विशेषगुणत्वेऽपि बुद्ध्यादिविशेषगुणसाधारणानुगतप्रयोजकविरहाद्रूपादीनां विशेषतोऽभिधानमितिभावः। प्रयोजकं निर्दिशति महदित्यादि। त्रसरेणुवृत्तिरसादौ व्यभिचारवारणाय सत्यन्तं, द्व्यणुकव्यावृत्तमहद्वृत्तित्वे सतीति तदर्थः। न च त्र्यणुकवृत्तिरसादेः प्रत्यक्षं स्यादिति वाच्यमनुभवविरुद्धत्वात्। रूपप्रत्यक्षे तु महत्त्वे त्र्यणुकव्यावृत्तत्वं न लेयं त्र्यणुकरूपप्रत्यक्षस्यानुभवसिद्धत्वात्। वस्तुतस्तु परमाणुत्र्यणुकरूपादौव्यभिचारवारणाय

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सत्यन्तम्। न चाणुद्व्यणुकयोरुद्भूतरूपसत्त्वे किं प्रमाणमितिवाच्यं त्र्यणुके उद्भूतरूपवत्त्वस्यैव मानत्वात् कारणगतरूपादीनां कार्य्यगतस्वसजातीयगुणारम्भकत्वनियमात्। घ्राणादिगतरूपादौ व्यभिचारवारणार्थमुद्भूतत्वमिति। त्वञ्च न जातिः शुक्लत्वादिनासाङ्कर्य्यप्रसङ्गात् किन्तु प्रत्यक्षत्वप्रयोजकधर्मविशेषः शुक्लत्वादिव्याप्यनानानुद्भूतत्वजात्यभावकूठो वा गुरुत्वभावनास्थितिस्थापकधर्म्माधर्म्मान्यगुणवृत्तिः। च चैवमभावकूठस्य प्रत्यक्षजनकतावच्छेदककत्वे विशेष्यविशेषणभावे विनिगमनाविरहाद्गुरुत्वकार्यकारणभाववाहुल्येन गौरवमितिवाच्यं तादृशाभावकूठस्यैकत्रद्वयमितिरीत्या स्वलेकपोतन्यायेन युगपद्विशेषणत्वोपगमात्।

अन्येतु गुणसाङ्कर्य्यस्य जातिवाधकत्वे मानाभावादुद्भूतत्वं प्रत्यक्षप्रयोजकतावच्छेदकतया सिद्धो रूपादिवृत्तीरूपत्वादिव्याप्यो जातिविशेष इत्याहुः।

नव्यास्तूद्भूतत्वस्य जातित्वे चाक्षुषादावुद्भूतरूपत्वादिना कारणत्वस्यानुभविकस्यानुपपत्तिर्व्व्याप्यव्यापकतापन्नजातिद्वयोरेककारणतायामनवच्छेदकत्वात्। किञ्च मिथो व्यभिचारवारणाय नानाकार्य्यकारणभावकल्पनापत्तिश्चेति प्राहुः।

नचात्र कार्य्यतावच्छेदककोटौ रूपादेर्व्विशेषतः प्रवेशोऽव्यर्थो गुणसामान्यप्रवेशे कार्य्यकारणभावान्तराकल्पनया लाघवादिति वाच्यं गगनादिवृत्तिसंयोगादेः प्रत्यक्षतापत्तेः। न चेष्टापत्तिः, गगनादेरतीन्द्रियत्वात्। न चैवमतीन्द्रियगगनवृत्तित्वाच्छब्दस्याप्रत्यक्षत्वं स्यादिति वाच्यं शब्दस्य विशेषगुणत्वात्। रूपाद्यात्मकविशेषगुणप्रत्यक्षप्रयोजकमुक्त्वा सामान्यगुणप्रत्यक्षप्रयोजकमाह सामान्यगुणप्रत्यक्ष इति। आश्रयप्रत्यक्षमिति। न च गुणसामान्यप्रत्यक्षत्वावच्छिन्नं प्रत्येवाश्रयप्रत्यक्षस्य हेतुत्वे नानाकार्य्यकारणभावाकल्पनाल्लाघवमिति वाच्यं वायवीयस्पर्शादेः शब्दादेश्चाप्रत्यक्षतापत्तेः। यद्यपि बुद्धिप्रत्यक्षेऽप्याश्रयप्रत्यक्षस्य प्रयोजकत्वं सम्भवति तथापि बुद्धित्वस्य निर्व्विकल्पकप्रत्यक्षसाधारण्याद्विशिनष्टि बुद्धिप्रत्यक्ष इत्यादि। न चेश्वरीयबुद्धेः प्रत्यक्षत्वे किं मानमितिवाच्यं ईश्वरीयस्य जगत् साक्षात्करोमीत्याद्यनुभवस्यैव मानत्वात्।

स्ववृत्तिविशिष्टज्ञानत्वमिति। प्रयोजकमिति पूर्व्वेणान्वयः। अविद्यमानस्यासम्बद्धस्य च विशिष्टज्ञानत्ववतः प्रयक्षासम्भवात् स्वपदं प्रत्यक्षयोग्यतत्तद्विशिष्टज्ञानपरिचायकमिति ध्येयम्। अप्रत्यक्षज्ञानविशेषे विशिष्टज्ञानत्वसत्त्वेन व्यभिचारवारणाय स्ववृत्तीति। तादृशं यद्विशिष्टज्ञानत्वं तस्य कालिकेन घटादावपि सत्त्वाद्व्यभिचारवारणाय सम्बन्धेन प्रयोजकत्वमुपेतव्यम्। स्ववृत्तिज्ञानत्वजातेः समवायेन निर्व्विकल्पकेऽपि सत्त्वाद्व्यभिचारवारणाय विशिष्टेति। विशिष्टज्ञानत्वञ्च प्रकारताविशेष्यताशालिज्ञानत्वम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यद्यपि विशेषगुणप्रत्यक्षत्वस्य कार्य्यतावच्छेदकत्वे बुद्धिप्रत्यक्षत्वादिना विविध-कार्य्यकारणभावाकल्पनाल्लाघवं तथापि कारणतावच्छेदकगौरवमाशङ्क्य तथा कार्य्य-कारणभावाकल्पनादाह सुखादिप्रत्यक्ष इति। आदिना दुःखादेः परिग्रहः। स्ववृत्ति-सुखत्वादिकमेवेति। प्रयोजकमित्यनेनान्वयः। आदिना दुःखत्वादेरुपग्रहः। अत्रापि पूर्व्ववत् स्ववृत्तिपदोपादानप्रयोजनमुन्नेयम्। प्रयोजकत्वञ्चसुखत्वादेः समवाय-सम्बन्धेन वाच्यम्, तेन कालिकेन घटादिवृत्तित्वेऽपि न व्यभिचारः।

अथावशिष्यमानशब्दस्यापि प्रयक्षविषयत्वमाहान्त्याद्येत्यादि। योग्यविभु-विशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यत्वनियमादुत्तरक्षणे शब्दानुत्पादादन्तिमशब्दस्य स्वोत्पत्तिद्वितीयक्षणनाश्यत्वमुपेयम्। तथाच तदुत्पादपूर्व्वोत्तरक्षणे तस्यासत्वादुत्पत्ति क्षणतः पूर्व्वं विषयेन्द्रियसन्निकर्षविरहेणान्तिमशब्दस्य प्रत्यक्षत्वं न सम्भवति, एवं वीचितरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दाच्छब्दान्तरोत्पादक्रमेण श्रवणेन्द्रियदे-शावच्छेदेन जातस्य प्रत्यक्षनियमादादिमशब्दस्य च तद्देशावच्छेदेनानुत्पन्नत्वात् प्रत्यक्षत्वं न सम्भवतीत्याशयेनोक्तमन्त्याद्यशब्दौ विहायेति। आद्यशब्दस्येत्युपलक्षणं द्वितीयादिशब्दस्यापि तद्देशावच्छेदेनानुत्पन्नत्वेऽप्रत्यक्षत्वं बोध्यम्। वस्तुतस्तु कार्य्यसह-भावेनेन्द्रियार्थसन्निकर्षस्य हेतुत्वोपगमेऽन्तिमशब्दस्य, श्रवणेन्द्रियदेशावच्छेदेनोत्पादे चाद्यशब्दस्य च प्रत्यक्षत्वे बाधकाभाव इति ध्येयम्॥२०॥

## ॥ तर्कामृतम् ॥

अथ गुणोत्पत्तिप्रक्रिया। अवयववृत्तिविशेषगुणा अवयविनि स्वसमानजातीय गुणानारभन्ते। पृथिवीविशेषगुणाः पाकजाः। ते द्विविधाः पाकप्रयोज्याः पाकजन्याश्च। कारणगुणप्रक्रमजन्याः पाकप्रयोज्याः अग्निसंयोगजन्या द्वितीयाः॥२१॥

## ॥ विवृतिः ॥

द्रव्य इव गुणेऽप्युत्पत्तिप्रक्रियाया अवश्यमभिधानीयत्वादाह गुणोत्पत्तीति। जन्यगुणोत्पत्तीत्यर्थः। तेनोत्पत्तेरप्रसिद्धत्वान्नित्यगुणेषु नाव्याप्तिः। अत्रोत्पत्तिराद्य-क्षणसम्बन्धः। आद्यक्षणत्वञ्च स्वाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरण-क्षणप्रागभावानधिकरणस्वाधिकरणक्षणत्वम्। उत्पत्तिप्रणालींप्रदर्शयति अवयवेत्यादि। अवयवत्वं द्रव्यसमवायिकारणत्वम्। अवयवनिष्ठसामान्यगुणानामवयविनिष्ठसामान्य-गुणानारम्भकत्वादुक्तं विशेषेति। तन्तुगतरूपादेर्घटाद्यवयविनिष्ठरूपाद्यनारम्भकत्वा-दाहावयविनीति। स्वसमवेतावयविनीत्यर्थः। विजातीयगुणानामनारम्भकत्वादाह

३

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वसमानजातीयेति। अत्र साजात्यं न गुणत्वेन, रूपादेः संयोगाद्यारम्भकतापत्तेः। नापि विशेषगुणत्वेन, रूपादेरसाद्यारम्भकत्वप्रसङ्गतात्। नापि स्ववृत्तिगुणत्वव्याप्यजातिमत्त्वेन, शुक्लरूपादेः पीतरूपाद्यारम्भकत्वप्रसक्तेः। किन्तु स्ववृत्तिरूपत्वादिव्याप्यजातिमत्त्वेन। तथा च शुक्लरूपादेः शुक्लरूपाद्यारम्भकत्वस्य पीतरूपाद्यनारम्भकत्वस्य च नानुपपत्तिः।

सामान्यतो विशेषगुणोत्पादप्रक्रियामुक्त्वा विशेषतो वक्तुं प्रक्रमते पृथिवीविशेषगुणा इत्यादि। अत्रजलादौ पाकासम्भवादाह पृथिवीति। अतएवोक्तं 'एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित्' इति। संख्यादिसामान्यगुणेषु पाकासम्भवादाह विशेषेति। पाकजा इति। पाकस्तेजःसंयोगस्तद्धेतुका इत्यर्थः। ते इति। पाकजविशेषगुणा इत्यार्थः। पाकप्रयोज्या इति। परस्परयापाकहेतुका इत्यर्थः। पाकजन्या इति। साक्षात्पाकहेतुका इत्यर्थः। तत्र ये पाकप्रयोज्यास्तान्निर्देष्टुमाह कारणगुणेत्यादि। कारणगुणप्रक्रमजन्यत्वन्तु स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यत्वम्। तथाचावयवपाकवादिमते द्व्यणुकाद्यवयविनिष्ठरक्तरूपादेस्तदुपपद्यते यतस्तन्मते परमाण्वादावयवे पाकेन श्यामरूपादिनाशानन्तरं जनिताद्रक्तरूपाहितो द्व्यणुकादौ रक्तरूपादिकमुत्पद्यते। तत्र द्व्यणुकादिनिष्ठरक्तरूपादिकं प्रति परमाणुगतपाकस्य परम्परयाहेतुत्वात् पाकप्रयोज्या इत्युक्तम्। ये च पाकजन्याः पृथिवीविशेषगुणास्तान्निरूपयितुमाहाग्निसंयोगजन्या इति। तेजःसंयोगसाक्षात्कारणकाइत्यर्थः। तथाचोक्तमते परमाण्वाद्यवयवगतरक्तरूपादिकं प्रति, अवयविपाकवादिमते च द्व्यणुकाद्यवयविनिष्ठरक्तरूपादिकं प्रति तेजःसंयोगस्य साक्षात्कारणत्वात् कारणगुणप्रक्रमजन्यत्वाभावेन तथाविधरूपादयः पाकजन्यत्वेन व्यपदिष्टा इति तत्त्वम्।

अत्र यद्यपि स्वाश्रयसमवायिसमवेतगुणजन्यत्वमेव कारणगुणप्रक्रमजन्यत्वं सम्भवति, तथाच वैशेषिकमते पृथिवीविशेषगुणानां सामान्यतो गुरुत्वस्थितिस्थापकपरिमाणैकपृथक्त्वस्नेहसांसिद्धिकद्रवत्ववेगानाञ्च तन्निर्व्वहत्यवयवनिष्ठानामेषामवयविन्येतत्सजातीयगुणारम्भकत्वात्तथापि करपुस्तकसंयोगादिजनितकायपुस्तकसंयोगादावतिव्याप्तिः करकायाद्योरवयवावयविमावादतः स्वाश्रयसमवायिमात्रसमवेतस्वज्ञातीयगुणजन्यत्वं विवक्षितम्। सजातीयत्वोपादानादवयवावयविनोरेकत्वाभ्यां जनितेऽवयवावयविद्वित्वादौ नातिव्यप्तिः। नच संख्यात्वेन सजातीयत्वान्नद्दोषतादवस्थ्यमितिवाच्यं। गुणत्वव्याप्यव्याप्यजातिमत्तेन साजात्यस्य विवक्षितत्वात्। न च गुरुत्वस्नेहयोस्तादृशजात्यप्रसिद्धयाऽव्याप्तिरिति वाच्यं तत्र गुणत्वव्याप्यजात्यैव साजात्यस्य विवक्षणीयत्वात् ॥२२॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ तर्कामृतम् ॥

श्यामघटेऽग्निसंयोगेन श्यामरूपनाशानन्तरं घटे रक्तरूपमुत्पद्यते इति नैयायिकमतम्। अग्निसंयोगेन परमाणौ पाके सति परमाणुषु रक्तरूपमुत्पद्यते, पुनर्घटोत्पत्तौ सत्यां कारणगुणक्रमेण घटे रक्तरूपमुत्पद्यते इनि वैशेषिकमतम् ॥२२॥

॥ विवृतिः ॥

पाकस्य साक्षात्कारणत्ववादिनैयायिकमतमुदाहरति श्यामघटइत्यादि। समारब्धपाके आमघटे वह्निना परमाणूनामभिघाते नोदने वा जाते सति तस्य नियमतो द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियोत्पादकत्वे मानाभावादवयविनां सच्छिद्रत्वाच्चान्तः प्रविष्टैर्व्वह्निसूक्ष्मावयवैः परमाणुमारभ्य श्यामघटस्वरूपावयविपर्य्यन्तं युगपदेव श्यामरूपनाशरक्तरूपोत्पादाववयविनाशं विनैवेति नैयायिकाशयः। न चावयविनां सच्छिद्रत्वे मानाभाव इति वाच्यमन्तर्न्निहिततैलादेर्घटादितः स्यन्दनात्।

पाकस्य परम्परया हेतुत्वं वदतां वैशेषिकाणां मतमुदाहरत्यग्निसंयोगेनेत्यादि। अयमभिप्रायः—अतिशयवेगवता तेजसा परमाणूनामभिघाते नोदने वा जाते सति तेष्ववश्यं क्रिया जायते, ततः क्रियातो विभागः, विभागादारम्भकसंयोगनाशः, ततोऽवश्यं यावदवयविनाशः कल्पनीयः कथमन्यथास्थाल्यामाहितानां तण्डुलादीनामधोवह्निसन्तापेन भर्ज्जनात्तदानीमेवनाशः परिदृश्यते। ततश्चस्वतन्त्रेषु परमाणुषु तेनैव तेजः संयोगेन श्यामरूपनाशरक्तरूपोत्पत्ती, ततोऽदृष्टादिघटितसामग्रीवशाद्रक्तपरमाणुद्वयसंयोगादिना रक्तद्व्यणुकादिक्रमेण यथावस्थितभावेन रक्तघटपर्य्यन्तमुत्पद्यते। एतन्मतेऽनन्तावयवि—तन्नाशप्रागभावादिकल्पनगौरवं 'सोऽयं घटः' इत्यादिप्रत्यभिज्ञाया अनुपपत्तिश्चेति ध्येयम् ॥२२॥

॥ तर्कामृतम् ॥

कपालं नीलमेकञ्चपीतं यदि तदा घटेचित्ररूपमुत्पद्यते। रसादावेवं सत्यवयविनि रसो न जायते चित्ररसाद्यस्वीकारात्। गुरुत्वस्थितिस्थापकयोश्च कारणगुणप्रक्रमजन्यता। द्वित्वादयोऽपेक्षाबुद्धिजन्याः। परिमाणं चतुर्व्विधं—अणुमहत्ह्रस्वं दीर्घञ्चेतिकारणगुणप्रक्रमजन्यम्। स्वावयवबहुत्वञ्च महत्त्वजनकं यथा त्रसरेणूनाम्। अवयवानां शिथिलः संयोगः प्रचयोऽपि तज्जनकः, यथा तूलस्य परिमाणम् ॥२३॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ विवृतिः ॥

अथ चित्ररूपस्वीकारे युक्तिमाह कपालं नीलमित्यादि। नीलादिपदमत्रोपलक्षणं तेन शुक्ललोहिताद्यवयवाभ्यामारब्धेऽवयविनि चित्ररूपोत्पादस्य नानुपपत्तिः। चित्ररूपमुत्पद्यत इति। तथाचावयविनिष्ठचित्ररूपं प्रति अनेकावयवेऽनेकरूपवत्त्वं कारणमितिभावः। न चावयविनिष्ठाव्याप्यवृत्त्यनेकरूपवत्त्वस्यैवावयविप्रत्यक्षकारणत्वसम्भवे किं चित्ररूपेणेति वाच्यं रूपस्य व्याप्यवृत्तित्वनियमात्। न च स्वसमवायिसमवेतत्वसम्बन्धेनावयवरूपस्य कारणत्वकल्पनेनैवानेकरूपवदवयवारब्धावयविनः प्रत्यक्षत्वोपपत्तौ चित्ररूपकल्पनमसङ्गतमितिवाच्यं गौरवदोषग्रासेन तादृशकार्य्यकारणभावस्याशक्यकल्पनत्वात्। तथाचानेकरूपवदवयवारब्धस्यावयविनः प्रत्यक्षत्वानुपपत्त्या चित्ररूपसिद्धिरितिभावः।

ननु चित्रवच्चित्ररसोऽपि स्यादितिशङ्कां निरसितुमाह रसादावेवं सतीति। एकावयवस्य मधुररसवत्त्वेऽपरावयवस्यतिक्तरसवत्त्वे च सतीत्यर्थः अवयविनि रसो न जायत इति। तत्र रसस्य जायमानत्वे विनिगमकाभावेन तस्य मधुरत्वं तिक्तत्वम्वेति निर्णेतुमशक्यत्वादितिभावः। तथाचावयविनि रसोत्पादं प्रत्यनेकावयवगतानेकरसस्य प्रतिबन्धकत्वमिति फलितम्। तत्र चित्ररस एवोत्पद्यतामित्यत आह चित्ररसाद्यस्वीकारादिति। आदिना गन्धादेः परिग्रहः। न चैवमनेकरसवदनेकावयवारब्धावयविनो रासनप्रत्यक्षत्वं नस्यादिति वाच्यमिष्टत्वात्। रसनेन्द्रियादेर्द्रव्यग्रहणेऽसामर्थ्याद्द्रव्यलौकिकरासनादिप्रत्यक्षस्याप्रसिद्धत्वात्ततदनुरोधेन चित्ररसाद्यङ्गीकारस्यानावश्यकत्वादितिभावः।

अथातीन्द्रियगुणानां मध्ये गुरुत्वस्यैव कारणगुणप्रक्रमजन्यत्वात्तदाह गुरुत्वेति। कारणगुणप्रक्रमजन्यतेति। कारणनिष्टस्वसजातीयगुणारभ्यत्वमित्यर्थः। तथाच घटनिष्ठगुरुत्वं प्रति कपालनिष्ठगुरुत्वमसमवायिकारणमित्यर्थः। एवं स्थितिस्थापकेऽपि। निमित्तकारणनिष्ठगुणस्यान्यथासिद्धत्वेन कार्य्यगुणानारम्भकत्वादत्रकारणपदं समवायिकारणपरमित्यवधेयम्।

एकत्वस्य नित्यगतस्य नित्यत्वादनित्यगतस्य चाश्रयनाशनाश्यत्वेदाह द्वित्वादय इति। आदिना त्रित्वादेरुपग्रहः। ननु कारणगुणप्रक्रमजन्यत्वाभावे द्वित्वादुत्पत्तौ किं कारणमित्याकाङ्क्षायामाहापेक्षाबुद्धिजन्या इति। गुरुत्वादिवत् संख्यायाः सामान्यगुणत्वेऽपि तत्र कारणगुणप्रक्रमजन्यत्वं न सम्भवतीत्याशयः। अनेकधर्म्मिषु प्रत्येकावच्छेदेनैकत्वप्रकारिका या बुद्धिः साऽपेक्षाबुद्धि स्तदात्मकनिमित्तकारणजन्या इत्यर्थः। तत्रासमवायिकारणन्तु समवायिकारणगतयावदेकत्वमितिबोध्यम्। तथाचादावयमेकोऽयमेकइत्याकारिकापेक्षाबुद्धिस्ततो धर्म्मिद्वये व्यासज्यवृत्तिद्वित्वोत्पत्ति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्ततो द्वित्वत्वे इत्याकारकनिर्व्विकल्पकविशेषणज्ञानं ततोद्वित्वविशिष्टद्वित्वप्रत्यक्षमपेक्षाबुद्धिनाशश्च ततः पञ्चमक्षणे द्वित्वस्यनाश इतिक्रमः। अत्र चेकोद्वावित्यप्रतीतेरेको न द्वाविति प्रतीतेश्च द्वित्वस्य पर्य्याप्त्याख्यसम्बन्धेनोभयवृत्तित्वं नतु प्रत्येकवृत्तित्वमित्यवधेयम्। एवं त्रित्वादावपि। अत्र द्वित्वप्रत्यक्षानुरोधेनापेक्षाबुद्धेः क्षणत्रयावस्थायित्वमभ्युपेयमन्यथा निर्व्विकल्पकक्षणे तस्याः प्रध्वंसे कारणाभावाच्चतुर्थक्षणे द्वित्वनाशावश्यम्भावाद्द्वित्वप्रत्यक्षानुपपत्तिरविद्यमानस्य प्रत्यक्षासम्भवात् 'सम्बद्धं वर्त्तमानञ्च गृह्यते चक्षुरादिना' इति लौकिकप्रत्यक्षनियमात्। एतेन योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यत्वनियमादपेक्षाबुद्धेश्च तथात्वात् स्वोत्पत्तितृतीयक्षणे नाशः स्यादित्यवास्तम्। परिमाणस्य कारणगुनोद्भवत्वं प्रतिपादयिष्यन् परिमाणोत्पत्तिप्रक्रियासमिधातुं विभजते तच्चतुर्व्विधमिति। तत्राणुत्वह्रस्वत्वे परमाणुद्व्यणुकवृत्ती। परमाणुत्वपरमह्रस्वत्वे तु परमाणुवृत्ती। एवं महत्त्वदीर्घत्वे त्र्यणुकमारभ्य महावयविपर्य्यन्तं वर्त्तेते। परममहत्त्वपरमदीर्घत्वे तु विभुचतुष्टयवृत्ती। नचामलकादावणुत्वस्येक्षुदण्डादौ ह्रस्वत्वस्य च व्यवहारः कथमुपपद्यत इति वाच्यं आपेक्षिकप्रकर्षाभावमूलकस्यापि तादृशव्यवहारस्य भाक्तत्वात्। तत्र परमाणावणुत्वं ह्रस्वत्वञ्चनित्यं द्व्यणुकनिष्ठन्तु परमाणुनिष्ठैकत्वाभ्यां जनितम्। परममहत्त्व परमदीर्घत्वयोर्न्नित्यत्वेन महत्त्वदीर्घत्वयोरुत्पत्तिप्रक्रियामभिधातुमाह कारणगुणप्रक्रमजन्यमित्यादि। महत्त्वासमवायिकारणमाह स्वावयववहुत्वमिति। स्वाश्रयस्यावयवनिष्ठं वहुत्वमित्यर्थः। तेन महत्त्वस्य गुणत्वात्तदवयवाप्रसिद्धावपि न क्षतिः। स्वं-महत्त्वम्। परमाणुगतद्वित्वेन द्व्यणुके महत्त्वानुत्पादान्त्रित्वचतुष्ट्वादेर्म्महत्त्वतारतम्यनियामकत्वेऽपिमहत्त्वावच्छिन्नं प्रत्यजनकत्वाच्चोक्तं वहुत्वमिति। तच्च त्रित्वादि संख्याभिन्नं नियतापेक्षाबुद्ध्यभावात् सेनावनादावुत्पद्यत इति श्रीधराचार्य्याः। एवं सति सेनावनादौ शतसहस्रादिकोटिकसंशयानुपपत्तिरित्याचार्याः। वस्तुतस्तु त्रित्वादिजनकापेक्षाबुद्धिजन्यं त्रित्वादिसमानाधिकरणं संख्यान्तरमेववहुत्वं वाच्यमन्यथाऽत्र वहवो घटाः सन्ति शतं सहस्रं वेति विशिष्य न जानीम इत्यादिव्यवहारानुपपत्तेः। संशयानुपपत्तिस्त्वसत्कोटिकसंशयोपगमात् परिहरणीयेति नव्याः। महत्त्वजनकमिति महत्त्वत्वावच्छिन्नासमवायिकारणमित्यर्थः। इदमुपलक्षणं दीर्घत्वासमवायित्वमपिबोध्यम्। स्वाश्रयावयवगतवहुत्वस्य महत्त्वजनकत्वे दृष्टान्तमाह यथा त्रसरेणूनामिति। तथाच त्रिभिर्द्व्यणुकैस्त्रसरेणूत्पादाद्द्व्यणुकगतवहुत्वसंख्या त्रसरेणुनिष्ठमहत्त्वजनिकेत्यर्थः। अत्र द्व्यणुकनिष्ठवहुत्वं प्रतीश्वरीयापेक्षाबुद्धेर्न्निमित्तत्वं परमाणुगतैकत्वानामसमवायित्वञ्चेत्यवधेयम्। न च त्रसरेणुपरिमाणं प्रति द्व्यणुकपरिमाणस्य कुतो नासमवायित्वमिति वाच्यं परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्व-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नियमादन्यथा महत्परिमाणस्यापि क्वचिदणुपरिमाणारम्भकतापत्तेः। एवञ्चाणोरणुतरत्वेन महतश्च महत्तरत्वेनोत्कर्षात्त्रसरेणुपरिमाणस्य द्व्यणुकपरिमाणापेक्षयोत्कर्षाभावेन द्व्यणुकपरिमाणासमानजातीयत्वेन च द्व्यणुकपरिमाणजन्यत्वासम्भवात्। नचैवं द्व्यणुकपरिमाणस्यापेक्षयानुत्कृष्टत्वेनाणुपरिमाणजन्यत्वासम्भवे द्व्यणुकपरिमाणं प्रति किं कारणमुपेयमिति वाच्यं परमाणुगतद्वित्वसंख्याया एव तत्रासमवायित्वाभ्युपगमात्। वस्तुतस्तु घटादिगतमहत्त्वं प्रति कपालादिनिष्ठमहत्त्वस्यासमवायित्वं वाच्यमन्यथा तत्र कपालद्वयेवहुत्वाभावाद्घटे महत्त्वं न स्यात्। तदुक्तमुपस्कारे 'द्वाभ्यां तन्तुभ्यामप्रचिताभ्यामारब्धे पटे केवलं महत्त्वमेवासमवायिकारणं वहुत्वप्रचययोस्तत्राभावात्' तथाच परिमाणस्य संख्याजन्यत्ववत्परिमाणजन्यत्वमपि सिद्धम्। परिमाणस्य प्रचयजन्यत्वमुदाहर्त्तुं प्रचयपदार्थमाहावयवानां शिथिलः सयोग इत्यादि। किञ्चिदवयवावच्छेदेनावयवान्तरसंयोगाभाववति वर्त्तमानत्वं शिथिलत्वं जातिविशेषो वा तज्जनक इति। महत्त्वजनक इत्यर्थः। दृष्टान्तमाह यथातूलस्येत्यादि। तूलपरिमाणमवयवशिथिलसंयोगेन जन्यत इति भावः ॥ २३ ॥

॥ तर्कामृतम् ॥

पृथक्त्वं कारणगुणप्रक्रमजन्यम्। ननु तत्र किं प्रमाणम्। घटात् पटः पृथगिति प्रत्यक्षम्। तस्यान्योन्याभावविषयकत्वमिति चेन्न अन्योन्याभावप्रत्यक्षे प्रतियोग्यनुयोगिनोः समानविभक्तिकत्वनियमात् यथा घटो न पट इति। अन्योन्याभावस्य पृथक्त्वरूपत्वे घटात्पटोनेत्यपि प्रयोगापत्तेः। न चैवं घटादन्यः पट इत्यत्र कथमन्योन्याभावप्रतीतिरितिवाच्यं अन्यत्वस्यापि पृथक्त्वरूपत्वात् ॥२४॥

॥ विवृतिः ॥

पृथक्त्वमिति। एकपृथक्त्वमित्यर्थाद्द्विपृथक्त्वादेः कारणगुणोद्भवत्वविरहात्। घटपटौ मठात्पृथगित्यादिप्रतीतिसिद्धे द्विपृथक्त्वादौ स्वसमानाधिकरणानामेकपृथक्त्वानामसमवायिकारणत्वं, इदमेकं पृथक्इत्याद्येकपृथक्त्वविषयकापेक्षाबुद्धेश्च निमित्तकारणत्वमिति वोध्यम्। तथाविधापेक्षाबुद्धिनाशात् क्वचिदाश्रयनाशात् क्वचिच्चोभाभ्यां द्विपृथक्त्वादेर्न्नाशः। तत्रोभयसमवेतपृथक्त्वं द्विपृथक्त्वं, त्रितयसमवेतपृथक्त्वं त्रिपृथक्त्वमिति रीत्यापरार्द्धपृथक्त्वपर्य्यन्तं निर्व्वाच्यम्।

केचित्त्वन्योन्याभावपृथक्त्वयोःसमनियतत्वेऽपि रूपं न रस इत्यादिप्रतीतेः साक्षात्पृथक्त्वानवगाहितया पृथकत्वविषयकत्वकल्पनस्यासम्भवेनान्योन्याभावविषयक-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कत्वमवश्यं कल्यम्। तथा चावश्यक्लृप्तान्योन्याभावेनैव पृथक्त्वावगाहिप्रतीते रप्युपपत्तौ पृथक्त्वस्वीकारे मानाभाव इत्याहुः। तन्मतं दूषयितुं पृच्छति ननु तत्रेति। पृथक्त्वपदार्थ इत्यर्थः। प्रत्यक्षमिति। पृथक्त्वसिद्धौ प्रमाणमिति शेषः। तत्प्रत्यक्षस्यान्योन्याभावविषयकत्वमाशङ्कते तस्येति। उक्तप्रत्यक्षस्येत्यर्थः। आशङ्कां निरस्यति नेति। तत्र युक्तिमाहान्योन्याभावप्रत्यक्ष इति। प्रतियोग्यनु-योगिनोरिति। प्रतियोग्यनुयोगिबोधकपदयोरित्यर्थः। अन्यथाऽसम्भवापत्तेः। घटं न पटं पश्यामि इत्यादावन्योन्याभावावगाहनात् प्रथमाविभक्त्यन्तत्वस्य तन्त्रत्वमपहायोक्तं समानविभक्तिकत्वेति। एकजातीयविभक्तिकत्वेत्यर्थः। तेन अनाप्तवादा न प्रमाणमित्यादौ पदयोः सित्वादिनासमानविभक्तिकत्वाभावेऽपि प्रथमात्वरूपेण समानविभक्तिमत्त्वान्नाभेदबोधान्वबोधानु पपत्तिः। अन्योन्याभाव-प्रतीतौ प्रतियोग्यनुयोगिबोधकपदयोः समानविभक्तिकत्वेदृष्टान्तमाह यथा घट इत्यादि। न त्वेवं मूले वृक्षः कपिसंयोगी नेत्यत्रापि कपिसंयोगिभेदप्रतीत्यापत्तिः। न चेष्टापत्तिरितिवाच्यं भेदस्याव्याप्यवृत्तित्वप्रसङ्गात्। मैवम्। शिखी विनष्टः पुरुषो न नष्टः इत्यत्र यथा धर्म्मिसत्त्वरूपबाधकबलात् विशेषणीभूतशिखाध्वंस विषयकत्वमात्रं कल्प्यते तथात्रापि धर्म्म्यैकत्वरूपबाधकबलाद्विशेषणीभूतकपि-संयोगात्यन्ताभावविषयकत्वस्य कल्पनात्। न च तत्र भेदावगाह्यनुव्यवसायविरोध-इतिवाच्यं प्रतीतेरत्यन्ताभावविषयकत्वेऽप्यनुव्यवसाये भेदावगाहने क्षत्यभावात्। इत्थञ्चात्रान्योन्याभावप्रत्यक्ष इत्यस्य बाधकाभावे इत्यादिः। वस्तुतस्तु विशेष-व्याप्तौ 'युज्यते चान्योन्याभावोऽव्याप्यवृत्तिः' इत्यनेनान्योन्याभावस्याव्याप्यवृत्तित्व-मभिहितं दीधितिकृतेति ध्येयम्। अतएव घटादौ पाकेन श्यामरूपनाशानन्तरं रक्तरूपोत्पादेऽयं न श्यामः, दण्डादिविनाशदशायां चैत्रादावयं न तद्दण्डवानित्यादि-व्यवहाराणां प्रामाण्यं सङ्गच्छते। न च तत्रापि श्यामत्वदण्डादेरत्यन्ताभाव एव प्रतीयत इति वाच्यं तद्धर्म्मिणि नञा संसर्गाभावबोधने तदर्थबोधकपदस्य सप्तम्यन्ततायास्तन्त्रत्वात्। न चैवं मैत्रो न गच्छतीत्यादौ गमनकृतेर्न्नेदं चैत्रस्ये-त्यादौ षष्ठ्यर्थसम्बंधस्यात्यन्ताभावो न प्रतीयतामितिवाच्यं प्रातिपदिकार्थस्या-त्यन्ताभावबोध एवानुयोगिबोधकपदोत्तरं सप्तम्यास्तन्त्रताया बिवक्षितत्वात्। नञ्वादेऽप्येवम्।

अथ भेदस्य पृथक्त्वरूपत्वे बाधकमाहान्योन्याभावस्येत्यादि। प्रयोगापत्तेरिति। यथा घटात् पटः पृथगित्यत्रपृथगितिपदात् पृथक्त्वं प्रतीयते तथा घटात् पटो नेत्यत्र भेदार्थंकनञा पृथक्त्व प्रतीयतां भेदस्य पृथक्त्वात्मकत्वादित्युक्तप्रयोगस्य प्रामाण्यं स्यादितिभावः यद्यपि नञो वैधर्म्म्यपरतया प्राचां मते पटो घटापेक्षया वैधर्म्म्यवान्—

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

घटवृत्त्यन्ताभावप्रतियोगिधर्म्मवानित्यर्थात् 'घटात् पटो न' इतिप्रयोगस्य प्रामाण्यमुपपादयितुं शक्यते तथापि नव्यमतेनञोऽभावशक्तत्वात्तथोक्तमिति ध्येयम् ।

प्रोक्तनियमे व्यभिचारमाशङ्कते न चैवमिति । एवं—अन्योन्याभावप्रतीतौ प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्त्यन्तत्वस्य तन्त्रत्वे । कथमिति । प्रतियोग्यनुयोगिवोधकपदयोरसमानपञ्चमीप्रथमाविभक्त्यन्तत्वादितिभावः । शङ्कां निरस्यति अन्यत्वस्येति ।

पृथक्त्वरूपत्वादिति । यद्यपि 'तथाच साध्यवत्पदेननिरूढ़लक्षणयोपस्थापितस्य साध्यतावच्छेदकविशिष्टसाध्यवत्त्वावच्छिन्नप्रतियोगिताकस्यान्यपदार्थैकदेशेऽन्यत्वे तादात्म्येनान्वयात् साध्यवतिच साध्यवत्त्वावच्छिन्नभेदासत्त्वान्नाव्याप्तिः' इत्यनेनसन्दर्भेणान्यत्वस्य भेदरूपतायाः पञ्चलक्षणीव्यवस्थानावसरे ग्रन्थकृतैवाभिहितत्वान्नेदं युक्तमन्योन्याभावस्य पृथक्त्वात्मकत्वतादवस्थ्यञ्च तथाप्यन्यत्वस्याखण्डोपाधिरूपत्वमिहाभिप्रेतमिति ध्येयम् । वस्तुतस्तु 'घटो न पटः' 'घटात्पटः पृथक्' इत्यादिप्रतीत्योर्व्वैलक्षण्यमेवान्योन्याभावपृथक्त्वयोर्व्वैलक्षण्ये मानमितिबोध्यम् ।

नव्यास्त्वन्योन्याभावस्यैवपृथक्त्वस्वरूपत्वं नतु गुणान्तरं मानाभावात् । नचोक्तप्रतीत्यौरर्थ वैलक्षण्याभावे घटो नेत्यत्रापि पञ्चमी स्यादितिवाच्यं निपातातिरिक्तान्योभावार्थकपदसमभिव्याहारस्यैव पञ्चमीप्रयोजकत्वोपगमात् ।।२४।।

## ॥ तर्कामृतम् ॥

संयोगस्त्रिविधः - अन्यतरकर्म्मज उभयकर्म्मजः संयोगजश्चेति । आद्यो यथा—मनः कर्म्मणात्ममनसोः संयोगः । द्वितीयो यथा—मेषयोः कर्म्मणा तयोः संयोगः । तृतीयो यथा कारणाकारणसंयोगात्कर्म्माकर्म्मसंयोगः । यथा—हस्ततरुसंयोगात्-कायतरुसंयोगः ।।२५।।

## ॥ विवृतिः ॥

संयुक्तव्यवहारासाधारणकारणीभूतं संयोगं विभजते संयोगस्त्रिविध इति । अन्यतरकर्म्मज इति । अन्यतरत्वं नाम भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वम् । अन्यतरकर्म्मासमवायिकारणक इत्यर्थः । उभयकर्म्मज इति । उभयकर्म्मासमवायिकारणक इत्यर्थः । उभयत्वमेकविशिष्टापरत्वमिति केचित् । तन्न मटे घटत्वपटत्वोभयं नास्तीतिव्यवहारानुपपत्तिप्रसङ्गात् व्यधिकरणयोर्घटत्वपटत्वयोर्व्वैशिष्ट्यविरहात् । किन्तुव्यासज्यवृत्तिद्वित्वमेवोभयत्वम् । संयोगज इति । संयोगासमवायिकारणक इत्यर्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विधात्रयं क्रमेणोदाहरति आद्य इत्यादि। आत्मनो निष्क्रियत्वादाह मनःकर्म्मणेति। हस्तेत्यादि। कायरुपावयविनं प्रति हस्तरुपावयवस्य हेतुत्वाद्धस्तौ कारणं तरुरकारणं तयोः संयोगादित्यर्थः। कायेत्यादि। कायो हस्तयोःकार्य्यं तरुरकार्यं तयोः संयोग-इत्यर्थः। नच यत्र हस्तक्रियया हस्ततरुसंयोगस्ततः शरीरतरुसंयोगस्तत्रइस्तक्रियायाः शरीरतरुसंयोगं प्रति हेतुत्वकल्पनेनैवोपपत्तौ हस्ततरुसंयोगस्य कारणत्वाकल्पनात् संयोगजसंयोगोऽसिद्ध इतिवाच्यः संयोगक्रिययोः समवायेन कार्य्यकारणभावस्यान्वय-व्यतिरकसिद्धत्वाच्छरीरे च समवायेन क्रियाया अभावाच्छरीरतरुसंयोगोत्पादानु-पपत्तेः। नच शरीरे कुतःक्रियायाअभाव इति वाच्यं अवयविक्रियाया यावदवयवक्रिया निगतत्वनियमात्। नच क्रियायाः सामानाधिकरण्यसम्बन्धेन हेतुत्वान्तरं तत्र कल्प-नीयमिति न तदुत्पादानुपपत्तिरितिवाच्यं विभिन्नकार्य्यकारणभावकल्पने गौरवात्तद-पेक्षया समवायसन्बन्धेन कारणत्वे लाघवादिति ध्येयम् ॥ २५ ॥

## ॥ तर्कामृतम् ॥

विभागोऽपित्रिविधः—अन्यतरकर्म्मज-उभयकर्म्मजोविभागजश्च। आद्योयथा मनःकर्म्मणात्ममनसोर्व्विभागः द्वितीयो यथा मेषयोःकर्म्मणा तयोर्व्विभागः। विभाग-जविभागोऽपि द्विविधः कारणमात्रविभागजः कारणाकारणविभागश्च। आद्यो यथा-कपालकर्म्मणाकपालद्वयविभागस्ततः कपालद्वयसंयोगनाशस्ततोघटनाशस्ततः कपा-लस्याकाशादिदेशा द्विभागजोविभागः। नच विभागः स्वोत्पत्त्यानन्तरमेव विभागज-विभागं जनयत्विति वाच्यं द्रव्यनाश सहकृतस्यैव तस्य तज्जनकत्वात्। तत्र द्रव्यस्य प्रतिबन्धकत्वेन सति द्रव्ये तदसम्भवात्। नच कर्म्मैवैकदा कपालद्वयविभागमाकाश-कपालविधागञ्च जनयत्विति वाच्यं यद्द्रव्यानारम्भकसंयोगविरोधिनं विभागमारभते न तद्द्रव्यारम्भकसंयोगविरोधिनम्; अन्यथा विकशत्कमलकुम्डलदलकर्म्मण्यति-व्याप्तिः। नच संयोगेऽस्त्येवमस्तु, तत्राविरोधात्। द्वितियस्तु कारणाकारणविभागात् कार्य्याकार्य्यविभागो यथा—करतरुविभागात् कायतरुविभागः॥ २६॥

## ॥ विवृतिः ॥

अथ विभक्तप्रत्ययासाधारणकारणं विभागं विभजते विभागोऽपि त्रिविध इति। ननु संयोगाभावएव विभागोऽस्तु किमतिरिक्तगुणेनेति चेन्न गुणादौ संयोगाभावसत्त्वेन विभागवत्त्वव्यवहारप्रसङ्गात्। नच द्रव्यनिष्ठसंयोगाभावस्यैव विभागत्वमितिवाच्यं समवायिसमवेतभावापन्नयोस्तन्तुपठाद्योः पठतन्त्वादिसंयोगाभावसत्त्वात्पठतन्त्वादि-विभागवत्त्वव्यवहारप्रसङ्गात्। नच संयोगनाश एव विभागः स्यादितिवाच्यं संयुक्तयो-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

र्घटपटयोरन्यतरनाशेन संयोगनाशे विभक्तप्रत्ययापत्तेः। नच विद्यमानद्रव्यवृत्तिसंयोगनाश एव तथेतिवाच्यं तथा सति यत्किञ्चित्संयोगनाशादुन्नरं पुनःसंयुक्तयोर्व्विभक्तत्वव्यवहारापत्तेः। नच यावत् संयोगनाशस्यैव तथात्वमितिवाच्यं मिथो विभागवतोर्विभ्वोर्यावत्संयोगाप्रसिद्धे रेकसंयोगनाशे यावत्संयोगनाशाभावाद्विभागाभाव प्रतीत्यापत्त्येश्च। नव्यास्तु संयोगाभावस्य विभागत्वे विनिगमकाभावाद्विभागाभावस्यापि संयोगत्वापत्त्याद्वयोर्व्विलयप्रसङ्गादवाधितसंयुक्तत्वविभक्तत्वप्रत्ययाद्गुरोधाच्च संयोगविभागयोरतिरिक्तत्वमभ्युपेतव्यमितिप्राहुः।

विधात्रयं क्रमेणोहादुरति आद्यो यथेत्यादि। तृतीयं पुनर्व्विभजते विभागजविभागोऽपीत्यादि। कारणमात्रे त्यत्र मात्रपदेनाकारणव्यवच्छेदः। तेन कपालतरुविभागजघटतरुविभागे कारणमात्रविभागजविभागत्वस्य नातिव्याप्तिः। तत्रादिम विधामुदाहरति आद्य इत्यादि। विभागजविभागघटकप्रथमविभागस्य क्रियाजन्यत्वमाह कपालकर्मणेति। कपालद्वयोर्घटसमवायिकारणत्वात् कारणमात्रविभागजन्यत्वंसङ्गमयितुमाह कपालद्वयविभाग इति। विभागस्य संयोगनाशकगुणत्वादावाह तत इति। कपालद्वयविभागादित्यर्थः। क्रियाजन्यविभागस्य पूर्व्वसंयोगनाशकत्वनियमादाह कपालद्वयसंयोगनाशः इति। असमवायिकारणनाशस्य कार्य्यद्रव्यनाशकत्वादुक्तं ततो घटनाश इति। घटारम्भककपालद्वयसंयोगनाशाद् घटनाश इत्यर्थः। कपालाकाशविभागे घटनाशस्य सहकारिकारणत्वादाह तत इति। घटनाशरूपसहकारिकारणादित्यर्थः। आकाशादीत्यादिनाभूतलादेः परिग्रहः। देशादिति पञ्चम्यन्तस्य विभागइति प्रथमान्तेनान्वयः। विभागज इति। पूर्व्वजातकपालद्वयविभागेन जनितइत्यर्थः। तथाच घटनाशसहकृतेन कपालद्वयविभागेन कपालाकाशविभागो जन्यतइतिफलितार्थः।

नन्वत्र कर्म्मणो नाशानभिधानान्नित्यत्वं स्यादिति चेन्न विभागस्य पूर्व्वसंयोगनाशकत्वनियमात् कपालाकाशविभागेन कपालाकाशसंयोगनाशः पूर्वसंयोगनाशेन चोत्तरदेशसंयोगजननान्नउत्तरदेशसंयोगस्तत उत्तरदेशसंयोगस्यैव स्वजनककर्म्मनिवर्त्तकत्वस्वाभाव्यात् कर्म्मनाशइति विवक्षितत्वात्।

शङ्कते नच विभाग इति। स्वोत्पत्त्यनन्तरमेवेति। स्वं—कारणमात्रविभागः, तस्योत्पत्त्यनन्तरमुत्पत्त्यव्यवहितोत्तरक्षणे—कर्म्मोत्पत्तितृतीयक्षण इत्यर्थः। एवकारेण कर्म्मोत्पत्तिपञ्चमक्षणोव्यवच्छिद्यत इतिभावः। जनयत्विति। तथा च क्षणलाघवमितितात्पर्य्यम्। शङ्कामपनोदति द्रव्यनाशेत्यादि। तस्येति। कारणमात्रविभागस्येत्यर्थः। तज्जनकत्वादिति। द्वितीयविभागजनकत्वादित्यर्थः। विभागजविभागं प्रति द्रव्यनाशस्य सहकारिकारणत्वे युक्तिमाह तत्र द्रव्यस्येत्यादि। तत्—विभागजविभागे द्रव्यस्य प्रतिवन्धकत्वेनेति। द्रव्यनाशं विना विभागजविभागस्यानुपपद्यमान-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तया द्रव्यनाशस्य कारणत्वाद्द्रव्यस्य प्रतिवन्धकत्वं संगच्छते कारणीभूताभावप्रतियोगित्वस्य प्रतिवन्धकत्वपदार्थत्वादितिभावः। तदसम्भवादिति। विभागजविभागसम्भवादित्यर्थः।

अत्र कपालकर्म्मण एव विभागद्वयजनकत्वे क्षणलाधवं दव्यनाशसहकारित्वाद्यकल्पनलाघवञ्चाभिसन्धाय शङ्कते नच कर्म्मैवेति। उभयविभागौ प्रतिकर्म्मणः-कारणत्वे विनिगमनाविरहात्तयोर्व्विभिन्नक्षणोत्पादकल्पनाऽसम्भवादाहैकदेति। कर्म्मोत्पत्तिद्वितीयक्षणइत्यर्थः। शङ्कां समाधत्ते यद्द्रव्येत्यादि। यत्—कपालकर्म्म, द्रव्यस्य—घटस्य, अनारम्भको यः कपालाकाशसंयोग स्तद्विरोधिनं—तत्प्रतिद्वन्द्विनं कपालाकाशविभागमारभते—जनयति, तत्—कर्म्म, द्रव्यस्य—घटस्यारम्भको यः कपालद्वयसंयोगस्तद्विरोधिनं...तत्प्रतिद्वन्द्विनं कपालद्वयविभागं नारभते—न जनयतीत्यर्थः। तथाच कपालकर्म्म द्रव्यानारम्भकसंयोगविरोधिविभागाजनकं द्रव्यारम्भकसंयोगविरोधिविभागजनकत्वात्, यन्नैवं तन्नैवमित्यनुमानं फलितमितिभावः। उक्तव्याप्तौ विपक्षवाधकतर्कमाविष्कर्त्तुमाहान्यथेति। आरम्भकसंयोगविरोधिविभागजनककर्म्मण एवानारम्भकसंयोगविरोधिविभागजनकत्व इत्यर्थः। विकसदित्यादि। विकसन्—विकाशोन्मुखो यः कमलकुम्डलः—पद्ममुकुलस्तस्य यानि दलानि तद्वृत्निकर्म्मणि द्रव्यारम्भकसंयोगविरोधिविभागजनकत्वस्यातिव्याप्तिरित्यर्थः। तथाच विकसत्कमलकुड्मल ङ्गप्रसङ्ग इतिभावः। तथाह्यरविन्दमुकुलेऽग्रावच्छेदेन विद्यमानेनानारम्भकसंयोगविरोधिविभागजनकेन कर्म्मणा मूलावच्छेदेनारम्णकसंयोगविरोधी विभाग उत्पाद्यते चेत्तेन थिभागेनारम्भकसंयोगनाशकस्तेनारविन्दस्य नाशः स्यादिति। इदं कणादमताभिप्रायेण। नैयायिकैस्तु कर्म्मण आश्रयभेदेन भिन्नत्वादुक्तारविन्ददलकर्म्मणि तथाविधविभागद्वयजनकत्वस्यासत्त्वेऽपि कपालकर्म्मणि सत्त्वे वाधकविरहात् कारणमात्रविभागजविभागो न स्वीक्रियते। नचोक्तानुमानमेव विभागजविभागे मानमितिवाच्यं अनारम्भकसंयोगविरोधिविभागाजनककर्म्मणी नियमत आरम्भकसंयोगविरोधिविभागजनकत्वे मानाभावेन कर्म्मनिष्ठवैजात्यस्योपाधित्वात्। कणादमतेतु तादृशवैजात्यस्यानुपलब्धेर्म्मानाभावः।

नन्वेवेभारम्भकसंयोगजनकं यत्कर्म्म तदनारम्भसंयोगजनकं न स्यादतः तन्तुद्वय संयोगजनकस्य कर्म्मणस्त्वाकाशसंयोगनकत्वाभावप्रङ्गात् कारणमात्रसंयोगजन्यसंयोगादिकमङ्गीकार्य्यमित्याशङ्कते नच संयोगेऽपीति। संयोगजनककर्म्मण्यपीत्यर्थः एवमस्त्विति। आरम्भकसंयोगजनकत्वानारम्भकसंयोगजनकत्वयोर्व्विरोधोऽस्त्वित्यर्थः। आशङ्कां निरस्यति तत्राविरोधादिति। विपक्षवाधकतर्कविरहादनारम्भकसंयोगजनकत्वारम्भकसंयोगजनकत्वयोः कर्म्मणि विरोधे मानाभावादित्यर्थः। तथाचै-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कस्य कर्म्मणस्तथाविधसंयोगद्वयजनकत्वस्याविरुद्धत्वादेव 'तन्तुद्वयसंयोगे तन्त्वाकाश-संयोगजनकत्वाकल्पनात् कारणमात्रसंयोगजसंयोगादौ मानाभाव एवेतिध्येयम्। द्वितीयस्त्विति। कारणाकारणविभागजन्यो विभागजविभागस्त्वित्यर्थः। उदाहरति करेत्यादि। करौ कारणं, तरुरकारणं, तयोर्व्विभागादित्यर्थः। कायेत्यादि। कायः करकार्य्यं, तरुः कराकार्य्यं, तयोर्व्विभाग उत्पद्यत इति शेषः॥ २६॥

॥ तर्कामृतम् ॥

परत्वापरत्वोत्वोत्पत्तिः कालप्रकरणे उक्ता॥ २७॥

॥ विवृतिः ॥

क्रमप्राप्तपरत्वापरत्वोत्पत्तिप्रक्रियाया अनभिधाने न्यूनत्वमित्याशङ्कां परिजिहीर्षुराह परत्वत्यादि॥१७॥

॥ तर्कामृतम् ॥

बुद्धिर्ज्ञानं, तद्द्विविधं स्मरणमनुभवश्च। स्मरणमपि द्विविधं यथार्थमयथार्थञ्च। तद्वति तत्प्रकारकत्वं यथार्थत्वम्, तदभाववति तत्प्रकारकत्वमयथार्थत्वम्। पूर्व्वानुभवः-संस्कारद्वारा स्मरणं जनयति। तत्र पूर्व्वानुभवस्य यथार्थत्वायथार्थत्वाभ्यां स्मरणमप्युभयरूपम्भवति॥ २८॥

॥ विवृतिः ॥

अथात्मविशेषगुणोत्पत्तिप्रक्रियामभिधातुमुपक्रमतेबुद्धिरिति। जानामीत्यनुव्यवसायसाक्षिकज्ञानत्वजातिस्सल्लक्षणमिति बोध्यम्। ज्ञानस्य बुद्धिवृत्तित्वमिति सांख्यमतं निरसितुं विवृणोति ज्ञानमिति। अतएव 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्' इत्यक्षपादसूत्रम्। बुद्धिं विभजते तद्द्विविधमिति। विधाद्वयमाह स्मरणमनुभवश्चेति। तत्र स्मरणत्वं संस्कारमात्रजन्यज्ञानत्वं जातिविशेषो वा। अनुभवत्वमपि स्मृत्यन्य ज्ञानत्वं जातिविशेषो वा। अथ स्मरणं विभजते स्मरणमपीति। अत्रापिना वक्ष्यमाणानुभवद्वैविध्यं सूचितम्। विधाद्वयं दर्शयति यथार्थमयथार्थञ्चेति। तत्र यथार्थत्वं लक्षयति तद्वतीत्यादि। सप्तम्यर्थो विशेष्यत्वं निरूपितत्वसम्बन्धेन प्रकारतायामन्वेति। तत्प्रकारकत्वमिति। तन्निष्ठप्रकारता निरूपकत्वमित्यर्थः। तथाच तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपकत्वं यथार्थत्वमित्यर्थः। एतेन रङ्गत्वेन रजतावगाहिनि रजतत्वेन च रङ्गावगाहिनि "'इमे रङ्गरजते' इत्याकारकसमूहालम्बनभ्रमेऽतिव्याप्तिस्तत्ररङ्गविशेष्यकत्वरङ्गत्वप्रकारत्वयोः रजतविशेष्यकत्वरजतत्वप्रकारकत्वयोः सत्त्वादिति निरस्तं रङ्गत्वप्रकारतायां रङ्गविशेष्यता-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निरूपितत्वस्य रजतत्वप्रकारतायां रजतविशेष्यतानिरूपितत्वस्य चासत्त्वात्। एवमेवानुभवादिगतयथार्थत्वमपि निष्कर्षणीयम्। अत्रच शुक्ताविदं रजतमिति रजतत्वप्रकारकभ्रमेऽतिव्याप्तिवारणाय तद्वतीति। अत्रच तद्वत्त्वं प्रकारतावच्छेदकसम्बन्धेन ग्राह्यम्। तेन कालिकसम्बन्धेन शक्तौ रजतत्वसत्त्वेऽपि शुक्तिधर्म्मिकेदं रजतमितिभ्रमे नातिव्याप्तिः। घट एव द्रव्यमिति द्रव्यत्वप्रकारकज्ञाने घटत्वप्रमात्वापत्तिवारणायोक्तसमूहालम्बनवारणाय वा तत्प्रकारकत्वनिवेशः।

अयथार्थत्वं लक्षयति तदभाववतीति। अत्रापि सप्तम्यर्थविशेष्यत्वस्य तत्प्रकारकत्वघटकप्रकारत्वस्य च प्रोक्तसम्बन्धेन तत्र तत्रान्वयो बोध्यः। तथाच तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपकत्वमयथार्थत्वम्। एवमेवानुभवादिनिष्ठायथार्थत्वमपि निर्व्वाच्यम्। अत्रच रजतधर्म्मिकेदं रजतमितिप्रभायामतिव्याप्तिवारणाय तदभाववतीति। तदभावश्च प्रकारतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। तेन पर्व्वतो बह्निमानिति प्रमायां समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववत्पर्व्वतविशेष्यकत्वसत्त्वेऽपि नातिव्याप्तिः। रजतत्वाभाववद्विशेष्यकरजतत्वाभावप्रकारिकायां शुक्तिधर्म्मिकेदं रजतत्वाभाववदिति प्रमायामतिव्याप्ति बारणाय तत्प्रकारकत्वनिवेशः।

अथ स्मृत्युत्पत्तिप्रक्रियामाह पूर्व्वानुभव इत्यादि। समानकालीनानुभवस्य स्मृतिजनकत्वासम्भावादाह पूर्व्वेति। ज्ञानत्वस्य स्मृतिसाधारण्यादाहानुभव इति। अनुभवस्य तृतीयक्षणप्रध्वंसित्वेन साक्षात् स्मृतिजनकत्वासम्भवादाह संस्कारद्वारेनि। भावनाख्यसंस्कारं व्यापारीकृत्येत्यर्थः। जनयतीति। तथाच तदीयतद्विषयकस्मृतित्वाविच्छन्नं तदीयतद्विषयकसंस्कारत्वावच्छिन्नञ्च प्रति तदीयतद्विषयकानुभवत्वेन हेतुत्वमित्यर्थः। तेन चैत्रीयानुभवेन मैत्रीयस्मृतिसंस्कारयोर्घटानुभवेन पटस्मृतिसंस्कारयोर्व्वा न प्रसङ्गः। न चानुभवत्वेन जनकत्वे गौरवमितिवाच्यं ज्ञानत्ववदनुभवत्वस्यापि जातित्वाद्गौरवानवकाशात्। इदन्तु प्राचां मतानुसारेण। नवीनमते तु स्मृतिसंस्कारौ प्रति ज्ञानत्वेनैव हेतुत्वमुपेतव्यमन्यथानुभवत्वेन हेतुत्वे सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गः संस्कारस्य फलनाश्यत्वनियमात्प्रथमस्मरणेनैवानुभवजनितसंस्कारस्य नाशात्। ज्ञानत्वस्यतु स्मृतिसाधारण्यात् सकृदनुभूतेऽपि प्रथमस्मृत्या संस्कारान्तरद्वारा पुनः स्मरणोपपत्तिः। अतएवोक्तं 'जायते च पुनः पुनः स्मरणाद्दृढतरः संस्कारः इति।

यथार्थायथार्थभेदेन स्मृतिद्वैविध्ये कारणं प्रदर्शयति तत्र पूर्व्वानुभवस्येत्यादि। स्मरणमपीत्यपिना भावनाख्यसंस्कारस्योपग्रहः। उभयरूपमिति। यथार्थायथार्थोभयरूपमित्यर्थः॥ २८॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## ॥ तर्कामृतम् ॥

अनुभवो द्विविधः प्रमाऽयथार्थश्च। तत्र प्रमा चतुर्व्विधा। सा वक्ष्यते। अयथार्थज्ञानं चतुर्व्विधं—संशयो विपर्य्ययः स्वप्नोऽनध्यवसायश्चेति। संशयो यथा —समानधर्म्मवद्धर्म्मिज्ञानविशेषादर्शनकोटिद्वयस्मरणैरयं स्थाणुर्व्वा पुरुषो वेतिज्ञानं जन्यते, स एव संशयः। विपर्य्ययस्तु समानधर्म्मवद्धर्म्मिज्ञानविशेषादर्शनैककोटिस्मरणैः शुक्ताविदं रजमितिज्ञानं जन्यते। तत्र गुरुमते इदमित्यनुभवात्मकं ज्ञानं, रजतमिति स्मरणात्मकं, तेन ग्रहणस्मरणात्मकं ज्ञानद्वयं नतु रजतत्वविशिष्टज्ञानमिदम्, अन्यथा भासमानसामग्र्य सम्भवात्। प्रवृत्तिश्च स्वतन्त्रोपस्थितेष्टभेदाग्रहात्। नैयायिकमते प्रवर्त्तकं विशिष्टज्ञानं, तेन भ्रमः सिध्यति। स्वप्नस्त्वनुभूतपदार्थस्मरणैरदृष्टेन धातुदोषेण च जन्यते अनध्यवसायश्च किञ्चिदितिज्ञानम् विशेषादर्शनाद्भवति। अत्र यद्ययं निर्व्वह्निःस्यान्निर्द्धूमः स्यादितितर्को विपर्य्ययमध्ये बोध्यः। तत्र नैयायिकमते स्वप्नाध्यवसायौ विपर्य्ययमध्ये प्रविष्टौ, तेन तन्मतेऽयथार्थज्ञाणं संशयोविपर्य्ययश्चेति ॥ २९ ॥

## ॥ विवृतिः ॥

अथानुभवं विभजतेऽनुभवोद्विविध इति। प्रमेति भ्रमान्य इत्यर्थः। वस्तुतस्तु निर्व्विकल्पकस्य प्रमात्वोपपत्तये विशेष्यावृत्त्यप्रकारकानुभवत्वरूपं प्रमात्वं वाच्यमिति ध्येयम्। स्मृतिकरणस्य प्रमाणान्तरत्वापत्तिभिया स्मृतेः प्रमात्वेन विभागो नाभिहित इतिभावः। अत्तएव यथार्थानुभवत्वमित्यनुभवत्वघटितप्रमालक्षणमिति नव्याः। वक्ष्यत इति। अथप्रमाकथ्यत इत्यादिनेतिशेषः। अयथार्थज्ञानमिति। अयथार्थानुभव इत्यर्थ; स्वप्नादेः स्मृतिरूपताया भाष्यादिविरुद्धत्वान्निर्युक्तिकत्वाच्च। विभजते तच्चतुर्व्विधमिति। अयञ्च विभागः कणादमतेन, नैयायिकमतेन तु स्वप्नाध्यवसाययोर्विपर्य्ययमध्योऽन्तर्भावस्य वक्ष्यमाणत्वात्।

विधाचतुष्टयादिमं संशयं निरूपयति संशयो यथेति। तत्र संशयत्वं न जातिश्चाक्षुषत्वादिना साङ्कर्य्यप्रसङ्गात् किन्तु वक्ष्यमाणज्ञानविशेषत्वरूपम्। उच्चैस्तरत्वस्य स्थाणुपुरुषसाधारण्याग्रहे स्थाणुर्व्वेति संशयानुत्पादाह समानधर्म्मवद्धर्म्मिज्ञानेति। समानः—विरुद्धकोटिद्वयसहचरितो योधर्म्मस्तद्वान् यो धर्म्मी तद्विषयकज्ञानेत्यर्थः। स्थाणुत्वव्याप्यवक्रकोटरादिमानयमित्यादिनिश्चयसत्त्वे स्थाणुर्व्वेत्यादिसंशयाजननादाहविशेषादर्शनेति। कोटिव्याप्यवत्त्वस्यानिश्चयेत्यर्थः। स्थाणुत्वपुरुषत्वरूपकोट्योरनुपस्थितत्वे स्थाणुत्वादिकोटिकसंशयासम्भवादाह कोटिद्वयेत्यादि। अत्र कोटिद्वयेत्युपलक्षणं,संशयस्य चातुष्कोटिकत्वमते कोटिचतुष्टयस्मृतेराव श्यकत्वात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वस्तुतस्तु शब्दत्वे नित्यानित्यव्यावृत्तत्वज्ञानेन, शाब्दसंशयोपगन्तृमते शब्दो नित्यो न वेति विप्रतिपत्त्या च शब्दो नित्यो नवेतिसंशयजननादसाधारणधर्म्मवद्ध-र्म्मिज्ञानस्य विप्रतिपत्तेश्च संशयहेतुत्वं मन्तव्यम्। तथाच साधारणधर्म्मवद्धर्म्मिज्ञान-जन्योऽसाधारणधर्म्मवद्धर्म्मिज्ञानजन्यो विप्रतिपत्तिजन्यश्चेतित्रिविधःसंशयः पर्य्यवसन्नः। विशेषादर्शनजन्यत्वस्य कोटिस्मरणजन्यत्वस्य च धर्म्मिज्ञानजन्यत्वस्येव संशयत्व-समव्याप्ततया संशयविभाजकत्वासम्भवेन न संशयस्य चतुर्व्विधत्वाद्यापत्तिः। तथाच विशेषादर्शनादेः साधारणधर्म्मज्ञानादिसहकारितेति तात्पर्यम्।

ननु 'समानानेकधर्म्मोपपत्तेर्व्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यावस्थातश्च विशेषा-पेक्षो विमर्शः संशयः' इत्यक्षपादसूत्रे प्रामाण्यसंशयस्याप्रामाण्यसंशयस्य च विषयसंशये स्वातन्त्र्येण हेतुत्वमिवानुक्तसमुच्चायकचकारेण व्याप्यसंशयस्य व्यापकसंशयं प्रति पृथक्कारणत्वमभिहितम्। एवञ्च संशयस्य त्रैविध्यादाधिक्यमेवोचितमिति चेन्न प्रामाण्यसंशयादिसत्त्वेऽपि लाघवेन साधारणधर्म्मवद्धर्म्मिज्ञानादेरेवसंशयहेतुत्वस्योप-गन्तव्यत्वात्। अन्यथा कार्य्यकारणभाववाहुल्याद्गौरवापत्तेः। प्रामाण्यसं शयादेस्तु कथञ्चित् प्रयोजकत्वकल्पनेऽपि क्षतिविरहात्। अस्त्वेवं, तथापि संशयत्वा-वच्छिन्नं प्रति साधारणधर्म्मवद्धर्म्मिज्ञानत्वादिना हेतुत्वस्य कल्पयितुमशक्यत्वादत्र हेतुहेतुमद्भावः परामर्शकारणताविचारदिशा परिष्करणीयः।

द्वितीयं निरूपयति विपर्य्ययस्त्विति। तदभाववति तत्प्रकारकनिश्चयत्वं विपर्य्ययत्वम्। धवलिम्नः शुक्तिरजतोभयसाधारण्यमजानतां शुक्तौ रजतत्वबोधा-सम्भावादाह समानधर्म्मवद्धर्म्मिज्ञानेति। शुक्तित्वव्याप्यकार्कश्यवदिदमितिज्ञाने जाते शुक्ताविदं रजतमिति ज्ञानानुत्पादादाह विशेषादर्शनेति। रजतत्वस्मृतिं बिना शुक्तौ रजतत्वधियोऽनुत्पत्तेराह एककोटिस्मरणैरिति। संशये कोटिद्वयस्मरणात्तद्व्यावृत्तये एकेति। शुक्ताविति धर्म्मिपरिचायकम्। इदं रजतमिति विपर्य्ययाभिनयः। नैयायिकमते शुक्तिकायामिदं रजतमित्यनुभवः प्रत्यक्षात्मक इदन्त्वावच्छिन्नांशे लौकिकसन्निकर्षजन्यत्वाल्लौकिको रजतत्वांशे रजतत्वज्ञानलक्षणासन्निकर्षजन्यत्वादलौ-किको जायत इत्यतउक्तं गुरुमत इति। अनुभवात्मकमिति। प्रत्यक्षात्मकमित्यर्थः। तेनानुमित्यादे रनुभवत्वसत्त्वेऽपि न क्षतिः। अलौकिकप्रत्यक्षानभ्युपगन्तृगुरुमते तत्र रजतत्वस्यानुभवविषयत्वासम्भवादाह स्मरणात्मकमिति। अन्यथाख्यातिमनभ्युपगम्यतां गुरूणां मते इदन्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकैकज्ञानासम्भवादाह ज्ञानद्वयमिति।

ननु रजतत्वविशिष्टज्ञानसत्त्वासत्त्वाभ्यां रजतार्थिनः प्रवृत्त्यप्रवृत्त्योर्दर्शनाद्र-जतप्रवृत्तित्वावच्छिन्नं प्रति रजतत्वविशिष्टज्ञानत्वेन कारणत्वं वाच्यमित्यथा-ख्यातिसिद्धिरित्याशङ्कां निषेधति ननुरजतत्वेत्यादि। तथाचावश्यक्लृप्तनियतपूर्व्ववर्त्ति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भ्यामुक्तज्ञानाभ्यामेव प्रवृत्त्युपपत्तेर्व्विशिष्टज्ञानत्वेनाकारणत्वान्नतदनुरोधेनान्यन्थया-ख्यातिस्वीकारो न युक्त इति भावः। तथाच विवादाध्यासिताः सर्व्वे प्रत्ययाः यथार्थाः प्रत्ययत्वाद् घटादिप्रत्ययवदित्यनुमानेन सर्व्वेषां ज्ञानानां यथार्थत्वस्य सिद्धत्वाद् भ्रमात्मकं विशिष्टज्ञानं नाङ्गीकरणीयमित्याशयेनाह अन्यस्येत्यादि। अन्यस्य—शुक्तिकायाः, अन्यथा...रजतत्वप्रकारेण, यद्भानं तस्य अलीकतया तत्सामग्र्यस्वीकारादित्यर्थः। वस्तुतस्तु सामग्रीप्रयोज्यभानस्यान्यथात्वाभावादित्यर्थः। तेन न सिद्धयसिद्धिभ्यां व्याधातः। अन्यथात्वञ्च विसम्वादीच्छादौ प्रसिद्धमित्यदोषः। दण्डादिघटितसामग्र्या घटत्वादिविशिष्टप्रसिद्धवस्तूत्पादप्रयोजकत्वाद्रजतत्वविशिष्ट शुक्तेश्चाप्रसिद्धत्वात्तदुत्पादासम्भवात्तत्सामग्री न स्वीक्रियत इति गुरूणामाशयः। न च रजतत्वविशिष्टशुक्तेरप्रसिद्धत्वेऽपि रजतत्वेन शुक्तेर्भाने किं बाधकमितिवाच्यं सन्निकर्षविरहेण रजतत्वस्य प्रत्यक्षासम्भवात्। किञ्चालौकिकसन्निकर्षानभ्युपगमेनालौकिकप्रत्यक्षस्येव कारणविरहेणानुमित्यादेश्चासम्भवात्। न त्वेवं नेदं रजतमिति-बाधग्रहेऽपि रजतस्मृतिपुरोवर्त्तिज्ञानयोःसत्त्वासत्ताभ्यां प्रवृत्तिर्ज्जायेतेत्यत आह प्रवृत्तिति। स्वतन्त्रेत्यादि। स्वतन्त्रेण उपस्थितः—स्मृतः, य इष्टः—रजतादिः तद्भेदाग्रहात्—तद्भेदग्रहाभावादित्यर्थः। तथाच नेदं रजतमित्यादावुपस्थितेष्ट रजतादिभेदग्रहस्य सत्त्वेन प्रवृत्त्यभावः, शुक्तौ रजते वा इदं रजतमितिप्रत्यये तु तथाविधभेदग्रहाभावसत्त्वात्प्रवृत्तिरिति तत्त्वम्।

नन्वेवं गुरुमते इष्टभेदाग्रहत्वेन प्रवृत्तिं प्रति कारणताया वक्तव्यत्वादवच्छेदकगौरव मतः स्वतन्त्रान्वयव्यतिरेकाभ्यां लाघवतः प्रवृत्तिं प्रति विशिष्टज्ञानत्वेनानुगतकार्य्य-कारणभावकल्पने संवादिविसंवादिप्रवृत्त्योर्नानुपपत्तिरिति नैयायिकमतमेवसाधीय इत्याशयेनाह नैयायिकमत इति। प्रवर्त्तकमिति। प्रवृत्तित्वावच्छिन्नकार्य्यतानिरूपित-कारणताकमित्यर्थ। विशिष्टज्ञानमिति। पुरोवर्त्तिविशेष्यकेष्टतावच्छेदकप्रकारक-ज्ञानमित्यर्थः। एवञ्च शुक्ताविदं रजतमितिज्ञानस्य रजतत्वाभाववद्विशेष्यकरजत-त्वप्रकारकत्वादन्यथाख्यातिरङ्गीकार्य्या इत्यतआह भ्रमः सिध्यतीति।

तृतीयं निद्राद्दृष्टान्तः करणजं स्वप्नं निरूपयितुमाह स्वप्नारूढ़िति। निद्रातु योगजधर्म्मानुगृहीतस्य मनसो निरिन्द्रियप्रदेशावस्थानमिति शिवादित्यः। निरिन्द्रिय-प्रदेशश्च स्वप्नवहानाड़ी मेध्यानाम्नी। अननुभूतार्थविषयकस्वप्नस्यासिद्धत्वादाहानुभूते त्यादि। न चैवमिन्द्रलोकाभिगमनादिस्वप्नस्यानुपपत्तिरिति वाच्यं तत्र पूर्व्वं विशिष्टेऽनुभवविरहेऽपि विशेष्यविशेषणानुभवस्य खण्डशो ध्रौव्यात्तज्जनितस्मृतिद्वारा तत्तद्विशेष्यांशे तत्तद्विशेषणस्य भ्रमात्मकः स्वप्न इत्यभ्युपगमात् जन्मान्तरीयविशिष्टा-नुभवस्य कल्पयितुं शक्यत्वाच्च। न च तत्र स्मृतौ किमुद्बोधकं कल्प्यमिति शङ्कां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अदृष्टविशेषस्यैवोद्बोधकत्वकल्पनात् । तथाचोत्कटेन कामेन क्रोधेन वोपहतचेता यं विषयमनुभूतो ध्यायन् स्वपिति तस्य तद्विषयकसंस्कारजस्मृत्या तद्विषयकः स्वप्नो जायते । यथा पुराणाद्यर्थश्रावणानुभवजसंस्कारपाटवजनितस्मरणेन किराताज्र्जुनीयं युद्धमित्याकारकः स्वप्नः ।

कार्य्यत्वावच्छिन्नं प्रति अदुष्टत्वेन हेतुत्वेऽप्यदुष्टविशेषणस्वप्नविशेणस्यानुभवसिद्धत्वादाहादृष्टेनेति । अदृष्टविशेषेणेत्यर्थः । तथाचैतस्मिन् प्राक्तने वा जन्मनि अनुभूते वस्तुनि निद्रादोषोपप्लुतचित्तस्य स्वप्नविशेषौ धर्म्माधर्म्माभ्यां जन्येते । तत्र कुञ्जरारोइणादिविषयकः स्वप्नो धर्म्मजः शुभसूचकत्वात् । वराहारोहणादिविषयकः स्वप्नोऽधर्म्मजोऽशुभसूचकत्वात् । तथाहि ज्योतिःशास्त्रम् 'आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् । आरुह्य नौकां प्रतिगृह्य वर्णां भुक्त्वा रुदित्वा ध्रुवमर्थलाभः' ॥ इत्यादिशुभावेदकम् । 'वराहर्क्षखरोष्ट्राणामारोहो महिषस्य च' इत्याद्यशुभावेदकम् । वातादिधातुदोषाभावे स्वप्नविशेषानुत्पादादाह धातुदोषेणेचेति । धातवः—वातपित्तश्लेष्मानः, तेषां यो दोषः—वैषम्यं, तेनेत्यर्थः । अतएव चरके 'दोषजं स्वप्नम्' इत्यत्र 'उल्वनवातादिदोषजन्यमिति टीकाकृतः । तत्र वातदोषेणाकाशगमनभूपर्य्यटनव्याघ्रादिभयपलायनादिविषयकः, पित्तदोषेण हुताशनप्रवेशनतज्ज्वालालिङ्गनहिरण्मयाचलादि विषयकः, श्लेष्मदोषेण च सिन्धुसन्तरणसरिन्निमज्जनराजताचलादिविषयकः स्वप्नोजन्यते । तथाचानुभूतार्थस्मरणादित्रितयस्य मिलितस्यैव स्वप्नहेतुत्वेऽपि तत्तत्स्वप्नविशेषे स्मरणादेर्म्मुख्यकारणत्वं सूचयितुमसमासकरणमिति ध्येयम् ।

एवञ्चोपरतवहिरिन्द्रियग्रामे प्रलीने च मनसि लौकिकसन्निकर्षाभावेन चाक्षुषादिरूपत्वासम्भावात्पूर्व्वानुभूतार्थस्मरणरूपज्ञानलक्षणासन्निकर्षेणजनितो वाधितार्थविषयकोऽलौकिकमानसप्रत्यक्षात्मकः स्वप्नः पर्य्यवसन्नः । अतएव अन्नम्भट्टाः स्वप्नमयथार्थञ्जातेऽन्तर्भावयामासुः । वल्लभाचार्य्यैरपि 'सिद्धोपप्लुतान्तःकरणजप्रवाहः स्वप्नः' इत्युक्तम् ।

न च स्वप्नस्यायथार्थञ्जानत्वे कुतः स्वप्नविशेषाद्ययथार्थार्थावाप्तिः सङ्गच्छत इति वाच्यं अयथार्थज्ञानस्यावाधितार्थजनकत्वे वाधकाभावात् । कथमन्यथा रज्जौ सर्पत्वाभ्रमाद्ययथार्थमुर्च्छादिः । तुरीयं नाध्यवस्यामीत्यनुव्यवसायसिद्धज्ञानत्वलक्षणकमनध्यवसायं निरूपयितुमाहानध्यवसायश्चेति । तद्धर्म्मावच्छिन्नविषयिताकः केवलतत्तद्विषयिताको वा बोधोऽध्यवसायः, स न भवतीत्यनध्यवसाय इदंत्वादिनाऽनिर्द्दिश्यमानवस्तुविषयकं किमिदमितिज्ञानमितियावदित्याशयेनाह किञ्चिदिति । तदुक्तं वल्लभाचार्य्यैः—'सामान्यतोऽवगते विशेषतोऽज्ञाते जिज्ञासिते वाच्यविशेषे यदा

४

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

किं शब्दाभिलापस्तदाऽनध्यवसायः' इति। यथास्थाणुत्वव्यापयवक्रकोटरादिमानय-मितिविशेषदर्शनेन स्थाणुर्वा नरो वेतिसंशयनिवृत्त्याऽयं स्थाणुरिति निश्चयो जन्यते तथात्रापि व्याप्यवत्त्वनिश्चयरूपोन्नायकसत्त्वे व्यापकनिश्चयरूपोन्नेयावश्यम्भावादाह विशेषादर्शनादिति। व्याप्यवत्त्वनिश्चयासत्त्वइत्यर्थः। 'किमिन्दुः किं पद्मम्' इत्यादौ यथेन्दुत्वाद्यभावभानं तथात्राप्यभावभानमुपगम्यास्यायथार्थमुपपाद्यम्।

ननु प्रमाणानुग्राहकस्याहार्य्यव्याप्यवत्त्वज्ञानजन्याहार्य्यव्यापकवत्त्वभ्रमात्मकस्य तर्कस्यापि सत्त्वादयथार्थानुभवस्य चतुर्व्विधत्वकथनमसङ्गतमित्याशङ्कां निरचिकीर्षु-राहात्रत्यादि। प्रमाणानुग्राहकत्वसत्त्वेऽप्ययथार्थानुभवविपर्य्ययत्वेनोपग्रहसम्भवे तर्कत्वेन पृथग्विभागे गौरवमिति भावः।

स्वप्नत्वानध्यवसायत्वयोरयथार्थानुभवविभाजकत्वं काणादाभिमतं गौरवदोष-ग्रासादेव नैयायिकैरनादेयमित्याह तत्र नैयायिकमते इति। प्रविष्टाविति। स्वप्नस्य मानसविपर्य्ययरूपत्वादनध्यवसायस्य च वाह्यमानसोभयविधविपर्य्ययात्मकत्वादिति भावः तन्मते नैयायिकमते। अयथार्थज्ञानं—अयथार्थानुभवः॥ २९॥

॥ तर्कामृतम्॥

सुखं धर्म्मजन्यम्। दुःखमधर्म्मजन्यम्। इच्छा इष्टसाधनताज्ञानजन्या। द्वेषोऽनिष्टसाधनताज्ञानजन्यः। कृति स्त्रिविधा जीवनयोनियत्नरूपा प्रवृत्ति-र्निवृत्तिश्च। आद्या जीवनादृष्टजन्या। द्वितीया इच्छाजन्या। तृतीया द्वेषजन्या॥ ३०॥

॥ विवृतिः॥

क्रमप्राप्तं सुखं निरूपयति सुखमिति। एतल्लक्ष्यनिर्देशपरम्। एवमग्रेऽपि। धर्म्म-जन्यमिति। समवायसम्बन्धावच्छिन्नधर्म्मत्वावच्छिन्नकारणतानिरूपितकार्य्यताकमि-त्यर्थः। तेन धर्म्मध्वंसादौ नातिव्याप्तिः। वस्तुतस्तु जन्यान्तं स्वरूपकीर्त्तनमात्रपरं लक्षणन्तु सुखीत्याद्यनुभवसिद्धसुखत्वजातिमत्त्वम्। तेनेश्वरे नित्यसुखस्वीकारपक्षेऽपि न तत्राव्याप्तिः। तन्मते सुखत्वस्य नित्यानित्यवृत्तित्वेन कार्य्यतावच्छेदकत्वासम्भवा-ज्जन्यसुखत्वस्य धर्म्मजन्यतावच्छेदकत्वमिति बोध्यम्। यन्तु बलवद्द्वेषविषयत्वेनानु-भविकस्य दुःखस्याभाव एव सुखमिति। तन्न। भोजनाद्यनन्तरं दुःखाभाववानहमित्य-नुव्यवसायानुत्पत्तेः सुख्यमित्यन्नुव्यवसायोत्पत्तेश्च। एतेन सुखस्य ज्ञानविशेषात्मक-त्वमित्यपास्तम्। उक्तान्नुव्यवसायविरोधान्न जाने न सन्देह्मि न निश्चिनोमीत्या-द्यनुव्यवसायाच्च।

दुःखं निरूपयति दुःखमिति। अधर्म्मजन्यमिति। अधर्म्मत्वावच्छिन्नसमवाय-सम्बन्धावच्छिन्नजनकतानिरूपितजन्यतावदित्यर्थः। तेनाधर्म्मध्वंसादौ नातिव्याप्तिः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. 5143


यद्यपि तादृशजन्यत्वस्यैव दुःखलक्षणत्वं सम्भवति तथापि लाघवाद्दुःखत्वजातिमत्त्वं लक्षणं बोध्यम्। सा च जातिरहं दुःखीत्याद्यनुव्यवसायसिद्धा। सुखाभावास्य ज्ञानविशेषस्य च दुःखत्वमुपेयिनो भ्रान्ताः प्रागुक्तदिशा निरसनीयाः। केचित्त्वक्षपादैः प्रमेयसूत्रे सुखस्यानभिधानाद्दुःखाभिन्नत्वमिच्छन्ति। तन्मन्दम्। नयनप्रसादमुखमालिन्याद्योः कार्य्ययोर्भेदेन सुखदुःखयोर्भेदात् स्रक्चन्दनफणिकण्ठकादिभ्यां धर्म्माधर्म्माभ्याञ्च विजातीभ्यां जनितयोस्तयोर्वैजात्यस्यावश्यकत्वाच्च। यत्पुनरक्षपादैरनभिधान तत्तु वैराग्ययोगितया सुखस्यदुःखाविभाविनाभावित्वसूचनायेति ध्येयम्।

इच्छां निरूपयतीच्छेति। कारणप्रदर्शनमुखेन लक्षणाभिधित्सयादेष्टेत्यादि। इष्टत्वञ्च ममेदमिष्टमित्यनुभवसाक्षिकविषयताविशेषः। इष्टसाधनताज्ञानजन्यत्वञ्च चिकीर्षाद्यसहकृतस्वनिष्ठसमवाय सम्बन्धावच्छिन्नजनकतानिरूपितजन्यत्वम्। तेन प्रवृत्त्यादौ स्वध्वंसे च नातिव्याप्तिः। वस्तुतस्त्विदमुपायेच्छायामेव सम्भवति, फलेच्छायामिष्टसाधनता-धीनिरपेक्षफलज्ञानस्य हेतुत्वात्। तथाच फलोपायविषयकत्वभेदेनेच्छाद्वैविध्यमिति बोध्यम्। तदुक्तं 'निर्दुःखत्वे-सुखेच्छा तज्ज्ञानादेव जायते इच्छातु तदुपाये स्यादिष्टोपायत्वधीर्यदि'॥ इति। उभयसाधारणलक्षणन्तु इच्छात्वजातिमत्त्वम्।

द्वेषं निरूपयति द्वेषइति। अनिष्टेत्यादि। अत्रापिस्वध्वंसे निवृत्त्यादौ चातिप्रसङ्गवारणाय जन्यत्वं पूर्व्ववन्निष्कर्षणीयम्। एवमुत्तरत्रापि। लक्षणन्तु द्वेषत्वजातिरेव। सा च निवृत्तिजनकतावच्छेदकतया सिद्धा वेदितव्या।

प्रयत्नं निरूपयितुमाह कृतिरिति। प्रयत्न इत्यर्थः। विभजते त्रिविधेति। तथा चैतत्त्रितयान्यतमन्वं यत्नत्वजातिमत्त्वम्वा लक्षणमितिभावः। विधात्रयमध्ये प्राधान्यादादौ जीवनयोनियत्नं निर्द्दिशति जीवनेति। जीवनस्य—प्राणसञ्चारस्य, योनिः कारणीभूतः, यो यत्नस्तत्स्वरूपेत्यर्थः। तस्यातीन्द्रियत्वेऽपि प्राणसञ्चाररूपकार्य्यानुमेयत्वम्। तथाहि प्राणसञ्चारः प्रयत्नसाध्यः कार्य्यत्वाद् घटवादित्यनुमानेनेतरप्रयत्नसाध्यत्वबाधात्तत् सिद्धिः। वस्तुनस्त्वदृष्टविशेषप्रयोज्यात्मनः संयोगविशेषात्मककेन जीवनेनादृष्टविशेषेण वाधिकश्वासादिरूपस्य प्राणसञ्चारस्योपपत्तेर्ज्जीवनयोन्याख्यापन्ने मानाभाव इति नवीनाः। तल्लक्षणन्तु प्रवृत्तिनिवृत्तिभिन्नत्वे सति यत्नत्वं प्राणसञ्चारविषयकयत्नत्वं वा। प्रवृत्तिरिति चेष्टाया रागस्य वा जनकतावच्छेदकतया सिद्धा प्रवृत्तित्वजातिरेवलक्षणम्। निवृत्तिरिति। निवृत्तित्वं द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः।

विधासु कारणं प्रदर्शयति आद्येत्यादि। आद्या—जीवनयोनिकृतिः, जीवनादृष्टजन्येति। जीवनस्य निमित्तीभूतं यददृष्टं तज्जन्येत्यर्थः। द्वितीया—प्रवृत्तिः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इच्छाजन्येति। चिकीर्षाजन्येत्यर्थः। तेन वृष्टिर्भवन्त्वितीच्छासत्त्वे प्रवृत्तेरनुत्पादेऽपि न क्षतिः इदन्तु बोध्यं—चिकीर्षाद्वारा कृतिसाध्यताज्ञानस्येष्टसाधनताज्ञानस्य च प्रवृत्तौ हेतुत्वेऽपि चिकीर्षाया नान्यथासिद्धत्वं व्यापारेण व्यापारिण इव व्यापारिणा व्यापारस्याप्यन्यथासिद्धत्वासम्भवान्मधु विषसम्पृक्तान्नभोजनादौ चिकीर्षाभावेन प्रवृत्त्यभावदर्शनाच्चिकीर्षाप्रवृत्त्यौहेतुहेतुमद्भावस्य स्वतन्त्रान्वयव्यतिरेकसिद्धत्वाच्च। अन्येतु मधुविषसम्पृक्तान्न भोजनादेर्व्वलवदनिष्टानुवन्धित्वेन तत्र वलवदनिष्टाननुवन्धित्वज्ञानविरहात्प्रवृत्त्यभावो ननु चिकीर्षाविरहनिवन्धन इति स्वतन्त्रान्वयव्यतिरेकसत्त्वात्प्रवृत्तौ वलवदनिष्टाननुबन्धित्वज्ञानत्वेनापि कारणत्वम् अतएवात्मजिघांसुर्व्वलवदनिष्टाननुवन्धित्वं प्रतिसन्धाय चिकीर्षामनपेक्ष्यैव मधुविषसम्पृक्तान्नभोजने प्रवर्त्तत इत्याहुः। वस्तुतस्तु वलवदनिष्टाननुबन्धीष्टसाधनताविशिष्टकृतिसाध्यताज्ञानस्य चिकीर्षाद्वारैव प्रवृत्तौ हेतुत्वेन चिकीर्षायाः साक्षात्कारणत्वमममभिप्रेत्योक्तमिच्छाजन्येति ध्येयम्।

तृतीया—निवृत्तिः। निवृत्तेः प्रवृत्त्यभावरूपत्वसभितिकेषाञ्चिन्मतमपाकर्त्तुमाह द्वेषजन्येति। साक्षाद्द्वेषजन्येत्यर्थः। तेन द्वेषजनकीभूतद्विष्टसाधनताज्ञानस्य परम्परया निवृत्तिहेतुत्वेऽपि न क्षतिः। एवञ्च द्वेषरूपकारणस्वातन्त्र्येणाहं निवृत्त इति विलक्षणप्रतीत्या च तस्या न प्रवृत्त्यभावरूपत्वमिति भावः ॥३०॥

॥ तर्कामृतम् ॥

धर्म्मः श्रुतिविहितकर्म्मजन्यः। अधर्म्मः श्रुतिनिषिद्धाचरणजन्यः। वेगाख्यसंस्कारः आद्यक्रियाजन्यो द्वितीयादिक्रियाजनकः। यथा वेगेन वाणश्चलतीति। भावनाख्यः संस्कारो विशिष्टज्ञानजन्यः। स्थितिस्थापकाख्यः संस्कारः कारणगुणप्रक्रमजन्यः। गुरुत्वं कारणगुणप्रक्रमजन्यम्। नैमित्रिकं द्रवत्वं घृतजतुद्रुतसुवर्णादीनामग्निसंयोगजन्यम्। स्नेहः कारणगुणप्रक्रमजन्यः॥ ३२ ॥

॥ विवृतिः ॥

धर्म्मं निरूपयितुमाह धर्म्म इत्यादि। धर्म्मत्वञ्च सुखजनकताऽवच्छेदकतया सिद्धो जातिविशेषः। श्रुतिविहितेत्यादि। अत्र श्रुतिपदं मन्वादीनामप्युपलक्षकम्। तेन श्रौतस्य दर्शपौर्णमासादे रिवस्मार्त्तस्य द्वादशयात्रादेरपि धर्म्मंजनकत्वम्। तथाच धर्म्मः श्रुत्यादिभिर्व्विहितं यत् कर्म्म अभिषेचनादिकं तेन निमित्तकारणेन जनित इत्यर्थः। तदुक्तं महर्षिकणादेन 'अभिषेचनोपवास ब्रह्मचर्य्यगुरुकुलवासवाणप्रस्थयज्ञदानप्रोक्षणदिङ् नक्षत्रमन्त्रकालनियमाश्चादृष्टाय' इति। तत्रादृष्टायेत्यस्यादृष्टद्वारा स्वर्गापवर्गलक्षणफलायेत्यर्थः। तथाच धर्म्माख्यादृष्टानभ्युपगमे सुतीर्थेऽभिषेक-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मधिकृत्याभिहितस्य पितृलोकावाप्तिरूपफलस्यानुपपन्निरभिषेकस्याशुतरविनाशित्वात् । तथाहि महाभारते 'तत्राभिषेकं कुर्व्वीत पितृदेवार्च्चने रतः। अश्वमेधमवाप्नोति पितृलोकञ्चगच्छति' इति। नचाभिषेचनाहेर्ज्जलसंयोगादिध्वंसस्यैव व्यापारत्वमास्तां किमन्तरा धर्म्मकल्पनयेनिवाच्यं गौरवप्रसङ्गात् स्वर्गादिधारापत्तेः कर्म्मनाशाजलस्पर्शादिनाश्यत्वानुपपत्तेश्च। तथाहि 'कर्म्मनाशाजलस्पर्शात् करतोयाविलङ्घनात्। गाण्डकीवाहुतरणात् धर्म्मःक्षयति कीर्त्तनात्' ॥ इति।

अधर्म्मं निरूपयितुमाहाधर्म्म इति। अधर्म्मत्वं दुःखजनकतावच्छेदकतयासिद्धजातिविशेषरूपम्। तत्र कारणमाह श्रुतिनिषिद्धमिति। श्रुतिपदमुक्तार्थकम्। तथाच श्रुत्या निषिद्धं—अनिष्टसाधनत्वेन बोधितं यद्ब्राह्मणहननादिकं तदाचरणरूपनिमित्तकारणजन्य इत्यर्थः अधर्म्मानभ्युपगमे 'य इह कपूयचरणा अभ्याशोह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा' इत्यादिश्रुत्याभिहितश्वादि-योनिप्राप्तेरनुपपत्तिरिति द्रष्टव्यम्।

अथात्मवृत्तिगुणोत्पादप्रक्रियामुपसंहृत्य भावनाख्यसंस्कारं निरूपयितुं संस्कारत्वावच्छिन्नानां मध्ये सूचीकटाहन्यायेनादौ समुद्दिष्टं वेगं निरूपयति वेगाख्य इति। वेगत्वञ्च जातिविशेषः। तत्र कारणं प्रदर्शयति आद्येत्यादि। द्वितीयादि क्रियाया वेगाजनकत्वादाद्येति। आदिमशब्दादेरपि वेगाजनकत्वादाह क्रियेति। आद्याक्रियाजन्यत्वस्यतद्ध्वंसादावपि सत्त्वादाह द्वितीयेत्यादि विशेष्यदलम्। तत्र च क्रियात्वस्यादिमक्रियायामपि सत्त्वात्तस्याश्चवेगाजन्यत्वाद्द्वितीयेति। आदिना तृतीयादिक्रियायाः परिग्रहः। अत्रचाद्यक्रियायावेगं प्रति वेगस्य च द्वितीयादि क्रियां प्रत्यसमवायिकारणत्वमवधेयम्। क्वचिद्वेगविशिष्टेन कपालेन घटे वेगजननस्य प्रत्यक्षसिद्धत्वाद्वेगस्यासमवायितया वेगजनकत्वमपि बोद्धव्यम्। नच वेगास्य संस्कारे मानाभाव इति वाच्यं वेगानभ्युपगमे कर्म्मणः कर्म्मान्तरप्रतिबन्धकत्वस्वाभाव्यात् पूर्व्वकर्म्मनाशस्यौत्तरकर्म्मोत्पादस्य चानुपपत्तेः। वेगस्य द्वितीयादिक्रियाजनकत्वं दृष्टान्तेनोपपादयति यथा वेगेनेत्यादि।

द्वितीयं संस्कारं निरूपयति भावानाख्य इति। भावनात्वञ्च स्मृतिजनकतावच्छेदकतया सिद्धजाति विशेषः। निर्व्विकल्पकस्य भावनाजनकत्वविरहादाहविशेष्टेति। उपेक्षानात्मकप्रकारतानिविशेष्यताशालिज्ञानजन्य इत्यर्थः। तेनोपेक्षात्मकविशिष्टज्ञानस्य भावनाजनकत्वविरहेऽपि न क्षतिः नचानुभवस्यैव भावनाजनकत्वादत्र ज्ञानजन्यत्वभिवेशोऽसङ्गत इति वाच्यं नव्यमते स्मृतेरपि भावनाजनकत्वात्। तदुक्तं 'जायते च पुनः पुनः स्मरणाद्दृढतरः संस्कारः' इति। प्राञ्चस्तु व्याप्यधर्म्मपुरस्कारेण कारणत्वसम्भवे व्यापकधर्म्मस्यान्यथासिद्धिनिरूपकत्वात्तद्विषयकस्मृति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

संस्कारौ प्रति तद्विषयकानुभवत्वेनैव कारणत्वं नतु तद्विषयकज्ञानत्वेन, अतोऽत्र ज्ञानपदमनुभवपरमितिवर्णयन्ति। अत्र विशिष्टज्ञानध्वंसेऽति व्याप्तिवारणाय स्मृतिजनकत्वे सतीति विशेषणं देयम्।

तृतीयं संस्कारमाह स्थितिस्थापकेति। अन्यथाकृतस्य वृक्षशाखादेः पुनस्तदवस्थापादनजनकतावच्छेदकतया सिद्धो जातिविशेषः। स्थितिस्थापकत्वम्। कारणगुणेत्यादि। कारणगुणप्रक्रमजन्यत्वपदार्थः प्राङ् निरूपितो द्रष्टव्य।

गुरुत्वोत्पाद प्रक्रियामभिधन्ते गुरुत्वमिति। आद्यपतनासमवायिकारणं गुरुत्वमित्यन्नम्भट्टाः। गुरुत्वत्वञ्च जातिविशेषः।

सांसिद्धिकद्रवत्वस्य विशेषगुणत्वात्तद्रुत्पादप्रक्रियायाः प्रागभिहितत्वान्नैमित्तिकद्रवत्वोत्पत्तिं निरूपयितुमाह नैमित्तिकमिति। निमित्तविशेषजन्यमित्यर्थः। तदेव दृष्टान्तेनोपपादयति गान्वित्यादि। नैमित्तिकद्रवत्वत्वं जातिविशेषः।

स्नेहस्य विशेषगुणत्वेऽपि पृथिव्यवृत्तित्वात् पृथक्तया तदुत्पादप्रक्रियामाह स्नेह इति। चूर्णादिपिण्डीभावहेतुर्गुणः स्नेह इत्यन्नम्भट्टाः॥ ३२॥

॥ तर्कामृतम्॥

शब्दस्त्रिविधः संयोगजो विभागजः शब्दश्चेति। आद्यो भेरीदण्डसंयोगजन्यः। द्वितीयो वंशादिदलद्वयविभागजन्यः। तृतीयस्तु संयोगेन चाद्यशब्दे जनिते तेन शब्देन निमित्तवायुसहकृतेन वीचितरङ्गन्यायेन कदम्बगोलकन्यायेन वा जन्यते॥ ३२॥

* इति। ॥ गुणनिरूपणम्॥ *

॥ विवृतिः॥

शब्दत्वावच्छिन्नोत्पादकत्वस्यैकत्रासम्भवाच्छब्दं विभजते शब्द इति। यद्यपि ध्वनिवर्णभेदेन शब्दस्य द्वैविध्यं वक्तुमुचितं तथाप्युत्पादप्रक्रियाप्रदर्शनकौशलाय तथा विभागः कृतः। संयोगज इत्यादि। अत्र साक्षात् संयोगादिजन्यत्वं विवक्षितम्। तेन शब्दजशब्दस्य परम्परया संयोगादिजन्यत्वेऽपि संयोगजत्वादेर्न विभाजकत्वानुपपत्तिः। भेरीदाण्डसंयोगज इति। अत्रभेरीदण्डसंयोगस्य निमित्तत्वं भेर्य्याकाशसंगस्य चासमवायित्वं द्रष्टव्यम्। वंशादिदलद्वयेत्यादि। आदिना काष्ठादेरुपग्रहः। अत्रापि तादृशविभागस्य निमित्तत्वं दलद्वयाकाशविभागस्यचासमवायित्वमितिबोध्यम्। तृतीयस्त्विति। जन्यत इति परेणान्वयः। संयोगेन चेति। अत्र चकारो वार्थे। तेनैकस्मिन् शब्दे संयोगविभागोभयजन्यत्वविरहेऽपिन क्षतिः। तेन शब्देनेति। आदिमशब्देनेत्यर्थः। अत्रचादिमशब्दस्य द्वितीयशब्दं प्रति, द्वितीयादिशब्दस्य च तृतीयादिशब्दं प्रत्यसमवायित्वमवधेयम्। स्वयमेव निमित्तकारणं दर्शयति निमित्तवाय्विति। यद्यपिकालादेरपि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कार्य्यमात्रं प्रति निमित्तत्वमस्ति तथाप्यत्र वायुमात्रस्योल्लखो विशेषनिमित्तत्वज्ञापनार्थः। तेन प्रवलवातेन तूर्णं शव्दसाक्षात्कारः सङ्गच्छते। ननु भेर्य्यादिदेशावच्छेदेनोत्पन्नस्य शव्दस्य कथं श्रोत्रेण ग्रहइत्याशङ्कायामाह वीचीत्यादि। अर्णवादौ तरङ्गमालोत्पादे यथैकेन तरङ्गेन तद्दशदिमवच्छिन्नोऽपरः उत्पद्यते, तेन चापरः तेन चापर इत्यादितथादिमशव्देन स्वदशदिगवच्छिन्नोऽपरः शव्द उत्पाद्यते, तेनच तद्दशदिगवच्छिन्नोऽन्यः शव्द इत्येवं क्रमेण श्रवनेन्द्रियदेशे जातस्य श्रवणेन्द्रियेण ग्रह इत्यर्थः। अत्र मतान्तरमाह कदम्वगोलकेत्याह। प्रथमशव्दात्तद्दशदिक्षु दक्षशव्दा जायन्ते, ततस्तेभ्यः शव्देभ्यस्तद्दशदिक्षु अपरे दक्ष शव्द इत्येवं श्रवणदेशेसमुत्पन्नानां श्रवणेन ग्रह इत्यर्थः ॥ ३२ ॥

## ॥ इति गुणनिरूपनविवृतिः ॥

## ॥ तर्कामृतम् ॥

उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्म्माणि। उत्क्षेपणत्वादीनिजातयः। पृथिवीजलतेजोवायुमनोवृत्तीनि कर्म्माणि सर्व्वाण्यनित्यानि। अतीन्द्रियवृत्तीन्यनीन्द्रियाणि। प्रत्यक्षवृत्तीनि प्रत्यक्षाणि ॥३३॥

## ॥ विवृतिः ॥

द्रव्यसमवेतत्वस्य तुल्यत्वेऽपि गुणजन्यत्वाद् गुणनिरूपणानन्तरं कर्म्म निरूपयत्युत्क्षेपणेत्यादि। नच संयोगविभागव्यतिरेकेण कर्म्म नास्तीति वाच्यं संयोगादि प्रतीति विलक्षणतया चलतीत्यादिप्रतीतेः सर्व्वानुभवसिद्धत्वात्। ऊर्द्ध्वात्यनुकूलचेतनक्रियोत्क्षेपणं मूषलमुत्क्षिपामीति व्यवहारात्। तत्रादावुत्क्षिपामीतीच्छा, ततः प्रयत्नः, ततः प्रयत्नवदात्मसंयोगरूपासमवायिकारणात् करादावुत्क्षेपणाख्यं कर्म्म जायते। निमित्तकारणन्तु तत्र गुरुत्वमेव। यन्तु तत्रोत्क्षेपणविशिष्टकरादिनोदन रूपासमवायिकारणादुत्क्षिप्तमूषलादावपि 'युगपदुत्क्षेपणं जायत इति तद्दृढतरद्रव्यसंयोगान्मूषलस्योर्द्ध्वगमनमेव ज्ञेयम्, तत्रेच्छादेः कारणत्वे मानाभावादुत्क्षेपणव्यवहारो भाक्त एव। एवं मूषलमवक्षिपामीतीच्छया प्रयत्नो जायते, ततश्च प्रयत्नवदात्मसंयोगात्मकारणाद्धस्तादावक्षेपणमुत्पद्यते। तत्राप्युक्त रीत्या मूषलादावपक्षेपणव्यवहारो भाक्तो वोद्धव्यः। इत्थञ्चाधोगत्यनुकूलचेतनक्रियावक्षेपणम्। आकुञ्चनत्त्वारम्भकसंयोगवद्द्रव्यवृत्ति परस्परमवयवानामनारम्भकसंयोगविशेषविनाशकं कर्म्म प्रसारणम्, यथा 'पद्मं विकशति' इत्यादौ। गमनेति। यद्यप्युत्तरदेशसंयोगानुकूल कर्म्मैव गमनं, गमनत्वेनोत्क्षेपणादेश्चाप्युपग्रहः सम्भवति तथाप्युक्तचतुष्टयभिन्नत्वे सति कर्म्मत्वं गमनत्वमिति पञ्चत्वसिद्धिः। अतएव एतच्छव्देननोत्क्षेपणत्वादिक-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ममि प्रेत्योक्तं वल्लभाचार्य्यैः 'एतद्रूपचतुष्कविवर्ज्जितं कर्म्मजातीयमेव गमनम्' इति। यानि तु भ्रमण-रेचन-स्पन्दन-ऊर्द्ध्वज्वलन-निर्य्यग्गमनादीनि कर्म्माणि सन्ति तानि तावद्गमानान्तर्मूतत्वत्नातिरिच्यन्त इत्यविरोधः। तत्र भ्रमणं नाम विजातीयोत्तर-संयोगानुकूलं कर्म्म। गुरुत्वासमवायिकारणकं नैमित्तिकद्रवत्ववद्वृत्त्यन्तरसंयोगानुकूलं कर्म्म रेचनम्। द्रवत्वासमवायिकारणकमुत्तरसंयोगानुकूलं कर्म्म स्पन्दनम्। वह्न्यादि-समवायिकारणकोर्द्ध्वसंयोगविशेषानुकूलं कर्म्मोर्द्ध्वज्वलनम्। पवनादिसमवायि-कारणकविजातीयोत्तरसंयोगानुकूलं कर्म्मनिर्य्यग्गमनमित्यादिकमूहनीयम्। तत्र भ्रमणत्वादयो गमनत्वव्याप्यजातिविशेषाः। कर्म्माणीति। तथाचोत्क्षेपणाद्यन्यतमत्वं कर्म्मत्वजातिमत्त्वम्वाकर्म्मसामान्यलक्षणमितिभावः। मूषलमूर्द्ध्वं गच्छतीत्यादि प्रतीत्यान्यथासिद्धानि उत्क्षेपणत्वादीनि नातिरिच्यन्तमित्याशङ्कामपनेतुमाहोत्-क्षेपणत्वादीनि जातय इति। आदिनावक्षेपणत्वादेरूपग्रहः। तथाचोत् क्षिपामीत्यादि-विलक्षणानुगतप्रतीत्या तेषां जातित्वसिद्धौ भेदकत्वं सिध्यतीति भावः। केचित्तु कर्म्मत्वजातेः प्रत्यक्षसिद्धत्वेऽपि उत्क्षेपणत्वादिकं न जातिः किन्तूर्द्ध्वदेशसंयोग-फलकक्रियावच्छिन्नव्यापारत्वादिरूपम्। गमनत्वञ्च संयोगावच्छिन्नक्रियात्वरूप-मित्याहुः।

अथकर्म्माश्रयान्निर्द्दिशति पृथिवीत्यादि। अत्र वृत्तित्वं समवायसम्बन्धेनैव वाच्यम् तेन कालिकादिसम्बन्धेन कर्म्मणः कालादिवृत्तित्वेऽपि न क्षतिः। अत्र यद्यपि कस्य-चिदपि कर्म्मणो यावत्पृथिवी व्यादिवृत्तित्वं न सम्भवति किन्तु तत्तत्कर्म्मण एव तत्तत्-पृथिव्यादिवृत्तित्वं तथापि कर्म्मत्वजातौ पृथिवीत्वाद्यवच्छिन्नाधिकरणतानिरूपिता-निरूपकतावच्छेदकत्वं विवक्षणीयमितपदोषः। सर्वेषां कर्म्मणां न प्रत्यक्षविषयत्व-मित्यते आहातीन्द्रियवृत्तीनीति। परमाण्वादिवृत्तीनीत्यर्थः। प्रत्यक्षवृत्तीनीति। त्रसरेण्वादिवृत्तीनीत्यर्थः॥ ३३॥

॥ तर्कामृतम् ॥

अथ कर्म्मप्रक्रिया। संयोगेन नोदनास्थेनाक्षं कर्म्म जन्यते। द्वितीयादि वेग-जन्यम्। क्रियातो विभागः। विभागात्पूर्व्वसंयोनाशः। तत उत्तरदेशसंयोगोत्पत्तिः। ततः कर्म्मविभागयोर्न्नाशः॥ ३४॥

* इति कर्म्मनिनिरूपणम् *

॥ विवृतिः ॥

संयोगेन नोदनाख्येनाद्यं कर्म्म जन्य इति। नन्विदमनुपपन्नं 'कर्म्मजोऽपि द्विधैव परिकीर्त्तितः अभिघातो नोदनञ्च' इत्युक्ते नोदनाख्यसंयोगस्यापि कर्म्मजन्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्वेनाद्यकर्म्मजनकत्वाभोगात् । नच नोदनजनकर्म्मार्थं नोदनान्तरमुपेयमितिवाच्यमनवस्थाप्रसङ्गात् नोदनजनितकर्म्मण आद्यत्वानुपपत्तेश्च । मैवम् । अत्र नोदनपदेन कर्म्माजन्यस्य विजातीयनोदनस्य विवक्षितत्वात् । निक्षिप्तशरादिनिष्ठद्वितीयादिक्रियाया असमवाय्यन्तराभावादाह वेगजन्यमिति । कर्म्मविभागयो निर्नाशइति । तथाच कर्म्मोत्पत्तिपञ्चमक्षणे कर्म्मणो विभागस्य च नाश इतिभावः । नच स्वोत्पादस्य स्वजनकना शस्य च द्वयोर्युगपद्विरुद्धत्वाद्विभागस्योत्पत्तये कर्म्मणो द्वितीयक्षणे नाशाम्भवेऽपि तृतीयक्षणे चतुर्थक्षणे वा नाशः कुतो न स्यादिति वाच्यं कर्म्मणा विना विभागमात्रेण पूर्व्वसंयोगनाशस्य पूर्व्वसंयोगनाशमात्रेण वोत्तरसंयोगस्य चोत्पत्तुमशक्यत्वात् ॥ ३४ ॥

॥ * ॥ इति कर्म्मनिरूपणविवृतिः ॥ * ॥

## ॥ तर्कामृतम् ॥

सामान्यं त्रिविधं व्यापकं व्याप्यं व्याप्यव्यापकं च । व्यापकं सत्ता, व्याप्यं घटत्वादि, द्रव्यत्वादि व्याप्यव्यापकञ्च । "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिवाधकसंग्रहः" ॥ नित्यत्वे सति अनेकसमवेतत्वमिति सामान्यलक्षणम् । सामान्यानि नित्यान्येव । अतीन्द्रियवृत्तीन्यतीन्द्रियाणि । प्रत्यक्षवृत्तीनि प्रत्यक्षाणि ॥ ३५ ॥

॥ * ॥ इतिसामान्यनिरूपणम् ॥ * ॥

## ॥ विवृतिः ॥

अथ क्रमप्राप्तं सामान्यं निरूपयितुमाह सामान्यमिति लक्ष्यनिर्द्देशपरम् । तदर्थश्च=समानानां—मिथो भेदवत्त्वे सति एकधर्म्मवतां, भावः—मिथोऽन्योन्याभावसमानाधिकरणो धर्म्मविशेष इति । लक्षणन्तु नित्यत्वे सतीत्यादिना वक्ष्यति । अथवा सामान्यपदस्योक्तनिरुक्तिरेव लक्षणः, नित्यत्वे सतीत्यादिकन्तु तस्यैव निष्कर्षः । तेन सामान्यस्य सामान्यलक्षणमनभिधाय त्रिविधमित्यनेन विशेषविभजनमनुचितमितिनिरस्तम् । विभजते त्रिविधमिति । विधात्रयं दर्शयति व्यापकमित्यादि । व्यापकत्वमधिकदेशवृत्तित्वम् । व्याप्यत्वञ्च न्यूनदेशवृत्तित्वम् । न्यूनत्वाधिकत्वयोरपेक्षाबुद्धि विशेषविषयत्वरूपत्वादापेक्षिकत्वं बोध्यम् । तेनानुगतन्यूनाधिकभावविरहेऽपि न क्षतिः । व्याप्यव्यापकत्वञ्च । अधिकदेशवृत्तित्वे सति न्यूनदेशवृत्तित्वरूपम् । तच्च सत्तापेक्षया न्यूनदेशवृत्तित्वात् पृथिवीत्वाद्यपेक्षयाधिकदेशवृत्तित्वाच्च द्रव्यत्वादेरुपपद्यते । लक्ष्यमाह व्यापकं सत्तेति । न च सत्ताया जातित्वे मानाभाव इति वाच्यं 'द्रव्यं सत्' 'गुणः सन्'

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्याद्यनुगतप्रतीतेरेव मानत्वात्। नव्यास्तु प्रागभाववृत्तिप्रतियोगित्वान्यप्रतियोगित्वसम्बन्धेन यत्र ध्वंसोत्पादस्तत्र तादात्म्यसम्बन्धेन सत्, यन्नैवं तन्नैवम्, इत्यन्वयव्यतिरेकाभ्यां ध्वंससतोः सामानाधिकरण्यप्रत्यासत्या कार्य्यकारणभावावधारणाद्ध्वंसकारणतावच्छेदकतया सत्ताजातिः सिध्यतीति प्राहुः। सत्ताया द्रव्यगुणकर्म्मवृत्तित्वात् केवलद्रव्यादिवृत्तिद्रव्यत्वाद्यखिलजात्यपेक्षयाधिकदेशवृत्तित्वाद्व्यापकत्वमित्यर्थः। घटत्वाद्यपेक्षयान्यूनदेशवृत्तिजातेरप्रसिद्धत्वाद्घटत्वादेर्व्यापकत्वासम्भवादाह व्याप्यं घटत्वादीति। आदिना पटत्वादेः परिग्रहः। वस्तुतस्तु व्यापकत्वेन व्याप्यत्वेन च सामान्यस्य द्विधैव विभागः समुचितस्तयोरापेक्षिकतया द्रव्यत्वादावुपपादयितुं शक्यत्वात्। अतएव 'सामान्यं द्विविधं परमपरञ्च' इत्युपस्कारकृतः।

वैनाशिकस्तु सामान्याख्यपदार्थे मानाभावः। अयं घट इत्याद्यनुगतप्रतीतिविषयतावच्छेदकत्वस्य घटादिपदप्रवृत्तिनिमित्तत्वस्य वा घटत्वादेर्ज्जातित्वासाधकत्वाद घटादीतरव्यावृत्तेरेवोक्तप्रतीतिविषयत्वाद्घटादिपदप्रवृत्तिनिमित्तत्वाच्च। किञ्च सामान्यवादिना घटत्वादेराश्रयो वक्तव्यः, स च न घटादिरुत्पत्तेः पूर्व्वमसत्त्वात्। नापि पटादिर्व्विरोधात्। न च पूर्व्वं घटाद्युत्पत्तिदेशावच्छेदेन वर्त्तमानं घटत्वादिकमुत्पन्नघटादिकमाश्रयतीति वाच्यं तथासति तदानीं तद्देशस्यापि घटत्वादिना व्यवहारप्रसङ्ग इत्यादि प्रलपन्ति। तन्न। अयं घट इत्यादिकाया भावमवगाहमानायाः प्रतीतेरितरभेदविषयकत्वाननुभवात्। घटमानयेत्यादौ घटादिपदश्रवणानन्तरमितरभेदादिकमनालोच्यैव कम्बुग्रीवादिमद्वस्त्वानयनदर्शनादितरभेदस्य प्रवृत्तित्वेगौरवाच्च। किञ्च नित्यं घटत्वादि सर्व्वत्रसदपि न घटादि व्यवहारोपपादकं समवायेन घटत्वाद्याश्रयस्यैव घटत्वादिना व्यवहारात्। अन्यथा कालिकेन रूपाद्याश्रयत्वान्महाकालस्यापि रूपादिमत्तया व्यवहारः स्यात्। तथाचोत्पत्तिपूर्व्वकालावच्छेदेन काले कालिकेन ज्ञाने वा विषयितया वर्त्तमानं घटत्वादिमुत्पन्नघटादौ समवैतीत्येव युक्तम्। यथा घटात्यन्ताभावो नित्यः कालिकेन काले वर्त्तमानो भूतलादितो घटापसारणे तद्भूतलादिकमाश्रयतीति दिक्।

असाधारणधर्म्मत्वाविशेषेऽपि गगणत्वादे र्ज्जातित्वाभावाज्जातिवाधकान्निरूपयितुमुदयनाचार्य्यकारिकामुद्धरति व्यक्तेरभेद इति। व्यक्तेः– स्वाश्रयीभूतव्यक्तेः, अभेदः—एकत्वमित्यर्थः। तच्च गगणत्वादे र्जातित्वे वाधकमिति भावः। व्यक्तीनामननुगतत्वादनुगतप्रतीत्यनुरोधेनैव जातिरभ्युपेयते। गगणादेश्चैकत्वेनैवानुगतप्रतीत्युपत्तौ गगणत्वादेर्जातित्वस्वीकारोऽनावश्यक इति तात्पर्य्यम्। न च घटादेरपि प्रत्येकमेकत्वस्य सत्त्वाद्घटत्वादेर्जातित्वं न स्यादिति वाच्यं स्वाश्रयसजातीयद्वितीयराहित्यस्याभेदशब्देन विवक्षितत्वात्वात्। साजान्यञ्च स्वसमनियतधर्म्मवत्त्वेनग्राह्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तेन गगणादे द्र व्यत्वादिना सजातीयत्वसत्त्वेऽपि न क्षतिः। न च गगणत्वादिसमनियत-धर्म्मेण सजातीयस्याप्रसिद्धिरिति वाच्यं स्वप्रतियोगित्वस्वानुयोगित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वस्याभेदसम्बन्धेन विवक्षितत्वात्। तथाच तद्घटो नेत्यादिभेदप्रतियोगित्वानुयोगित्वयो र्घटादौ सत्त्वाद्घटादे र्नभेदः किन्तु गगणादेरभेद एव कस्यचिदपि भेदस्य प्रतियोगित्वानुयोगित्वयोर्गगणादावभावात्; नहि तद्गगणं नेत्यादिभेदः प्रसिद्ध स्तद्गगणादेरप्रसिद्धत्वात्।

तुल्यत्वमिति। यद्धर्म्माश्रया यद्धर्म्माश्रयान्यूनानतिरिक्तास्तत्त्वं स्वेतरजातिसमनियतत्वमितियावत्। तच्च तद्धर्म्मयो र्जातिद्वयत्वे वाधकम्। यथा घटत्वकलसत्वयोः करत्वहस्तत्वयोर्व्वा। तयोरेकतरधर्म्मस्तु जातिः स्यादेव। यथा घटत्वं करत्वम्वा जातिरेकतरेणैवानुगतप्रतीत्युपपत्तेः।

सङ्करइति। परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेश इत्यर्थः। तदुक्तं 'अन्योन्यपरिहारेण भिन्नव्यक्तिनिवेशिनोः। सामान्ययोः समावेशो जातिसङ्कर उच्यते'॥ इति। सच भूतत्वमूर्त्तत्वादेर्जातित्वे वाधकः। तथाहि भूतत्वं विहाय मूर्त्तत्वस्य मनसि सत्त्वान्मूर्त्तत्वं विहाय भूतत्वस्यगगणेसत्त्वात्तयोः परस्परात्यान्ताभावसामानाधिकरण्यमेकत्रसमावेशश्च क्षित्यादाविति। न च साङ्कर्य्यस्य जातिवाधकत्वे मानाभाव इति वाच्यं स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्ट जातित्वाच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभाव इति नियमस्यैव मानत्वात्। साङ्कर्य्यस्य जातिवाधकत्वानभ्युपगमे तादृशनियमस्य भङ्गापत्तेः। नव्यानां मते तादृशनियमस्य निष्प्रमाणकत्वात् साङ्कर्य्यस्य जातिवाधकत्वं नास्तीति ध्येयम्।

अनवस्थितिरिति। अनवस्थाख्यतर्क इत्यर्थः। स चाप्रामाणिकानन्तपदार्थपरिकल्पनयाऽविश्रान्तिरूपः सामान्यत्वस्य जातित्वे वाधकः। तथाहि द्रव्यत्वपृथिवीत्वाद्याखिलजातिषु यदनुगतं जातित्वं वर्त्तते तस्य जातित्वाभ्युपगमे जातित्वाख्यजातावपि जातित्वमभ्युपेयं, तस्य च निखिलतज्जातिवृत्तित्वत्तापि पुनर्जातित्वमित्येवं क्रमेणानवस्थेति भावः।

रूपहानिरिति। रूपस्य-स्वतोव्यावर्त्तकत्वात्मकस्य, हानिः—भङ्गः, विशेषत्वस्य जातित्वे वाधक इत्यर्थः। तथाहि जात्याश्रयस्य वस्तुनस्तज्जातिपुरस्कारेणैवेतरभेदसाधाकत्वनियमाद्विशेषत्वस्य जातित्वाभ्युपरागे तेन विशेषत्वेन जात्यैव विशेषाणां व्यावर्त्तकत्वं वाच्यं, तथाच विशेषाणां यत् स्वतोव्यावर्त्तकत्वं—स्वेनेव रूपेण व्यावर्त्तकत्वं—जात्यनवच्छिन्नेतरभेदसाधकत्वं तद्भज्येतेनि भावः।

असम्बन्धइति। असमवेतत्वमित्यर्थः। तच्च समवायत्वाभावत्वादेर्ज्जातित्वे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बाधकम्। न च समवायस्यैकत्वाद्युक्तेरभेदइत्यनेनैव चरितार्थत्वमस्त्विनि वाच्यं तत्तत्प्रतियोगिकत्वतत्तदनुयोगिकत्वादिना समवायस्य नानात्वस्वीकारादिति नव्याः।

प्रसङ्गतो जातिबाधकानुक्तत्रावसरतो जातिलक्षणमाह नित्यत्वे सतीति। संयोगादावतिव्याप्तिवारणाय सत्यन्तम्। अत्र नित्यत्वं प्रागभावाप्रतियोगित्वं ध्वंसाप्रतियोगित्वम्वा, नतूभयाप्रतियोगित्वं निष्प्रयोजनकत्वात्। न च विभुद्वयसंयोगेऽति व्याप्तिरितिवाच्यं विभ्वो; संयोगे मानाभावात्। गगणपरिमाणादावतिव्याप्तिवारणायानेकेति। अन्यन्ताभावादावतिप्रसङ्गवारणाय वृत्तित्वं विहाय समवेतत्वमिति। गगणादावतिव्याप्तिवारणाय विशेष्यदलम्। सामान्यानामनित्यत्वाप्रसिद्धेराह नित्यानीति। अतिन्द्रियवृत्तीनीति। परमाण्वादिवृत्तीनीत्यर्थः। प्रत्यक्षवृत्तीनीति। त्रसरेण्वादिवृत्तीनीत्यर्थः ॥३५॥

## ॥ * ॥ इति सामान्यनिरूपणविवृतिः ॥ * ॥

## ॥ तर्कामृतम् ॥

नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः। ते च बहवो नित्या अतीन्द्रियाश्च। प्रलये परमाणूनां भेदाय ते स्वीक्रियन्ते। तेषां वैधर्म्यव्याप्यत्वात् ॥३६॥

## ॥ * ॥ इति विशेषनिरूपणम् ॥ * ॥

## ॥ विवृतिः ॥

अथ क्रमप्राप्तं विशेषं निरूपयति नित्यद्रव्येत्यादि। अन्त्या इति। अन्ते—व्यावर्त्तकानामवसाने भवन्तीत्यन्त्या इति व्युत्पत्त्या यस्य न व्यावर्त्तकान्तरमस्ति तत्त्वमत्र विशेषलक्षणंबोध्यम्। नित्यद्रव्यवृत्तीत्यंशस्तु परमाणुगगणादीनां विशेषाश्रयत्वप्रदर्शनाय, नतु लक्षणघटकतया, लक्षणे तत्प्रवेशे प्रयोजनविरहात्। कणादसूत्रवृत्तिकारानुयायिनस्तु अत्रान्त्यपदस्य नित्यार्थकत्वंमन्यमाना नित्यत्वे सति नित्यद्रव्यवृत्तित्वं विशेषलक्षणमित्याहुः। तत्र जन्यज्ञानादावतिव्याप्तिवारणाय सत्यन्तम्। गगणादावतिप्रसङ्गवारणायविशेष्यदलम्। घटत्वादिजानावतिव्याप्तिवारणाय नित्यपदम्। ज्ञानत्वादिजातावतिव्याप्तिवारणायद्रव्यपदम्। वृत्तित्वञ्च समवायसम्बन्धेन ग्राह्यम्। तेन कालिकेन घटत्वादेर्म्महाकालवृत्तित्वेऽपि नातिव्याप्तिः। तथापि तेषां मते आत्मत्वादावतिव्याप्तितादवस्थ्यम्। यदि च तद्वारणाय नित्यद्रव्यावृत्तित्वादिविशेषणं लक्षणे प्रक्षिप्यते तदा त्वतिगौरवमिति ध्येयम्। केचित्तु जातिजातिमदभिन्नत्वे समवेतत्वं विशेषलक्षणं वर्णयन्ति।

अथ विशेषपदार्थस्वीकारे युक्तिमाह प्रलयइत्यादि। अन्यदात्वन्त्यावयवित आरम्य द्व्यणुकपर्य्यन्तानां तत्तदवयवभेदेन भेदस्य सिद्धत्वेऽपि प्रलये द्व्यणुकादीनामभा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वादत्यन्तसंकीर्णानां परमाणूनां भेदकान्तरासत्त्वात् सर्गान्तरीयमुद्तमभाषादिविभिन्न-जातीयवस्त्वारम्भकपरमाणुभेदकतयैकैकपरमाणुसमवेताः स्वतो व्यावृत्ता विशेषाः स्वीकरणीया इतिभावः। नचैकजातीययावत्परमाणुष्वेकविशेषाभ्युपगमेनैवोक्तदोष-वारणसम्भवे किं प्रतिपरमाणुमेकैकविशेषेणेतिवाच्यमेकविशेषस्य यावदाश्रितत्वानुप-पत्तेरेकस्यान्यकार्य्यजनकत्वप्रसङ्गाच्च। न च तत्तत्परमाणुनिष्टमेकत्वमेव भेदकमस्तु किं विशेषेणेति वाच्यमेकत्वस्य व्यभिचारित्वात्तदेकत्वस्य भेदकताया वाच्यत्वात्त-देकत्वस्य च दुर्न्निर्व्वाच्यत्वात्। इत्थञ्च विशेषाणां मिथो भेदसाधनाय विशेषान्तरमङ्गीकार्य्यमितिनिरस्तं तेषां स्वतो व्यावृत्तत्वात्। विशेषाणां प्रतिपरमाणुभेदेन भिन्नत्वे हेतुमाह तेषां वैधर्म्यव्याप्यत्वादिति। स्वतो व्याहृतत्व-स्वाभाव्यादित्यर्थः। तथाच विशेषाणां मिथो विधर्म्मत्वान्नदाश्रयीभूताः परमाणवोऽपि मिथो विधर्म्माण इतिभावः। नव्यास्तु यथा विशेषास्तवमते स्ववृत्तिधर्म्ममनपेक्ष्यैव स्वतो व्यावृत्तास्तथा मन्मते परमाणवोऽपि विशेषंविनैव स्वतोव्यावृत्ता इतिविशेषाख्य-पदार्थे मानाभावइति वदन्ति ॥३६॥

॥ * ॥ इति विशेषनिरूपण विवृतिः ॥ * ॥

॥ विवृतिः ॥

अथ क्रमप्राप्तं समवायं लक्षयतिसम्बन्धिभिन्न इति। सम्बन्धिभिन्न इति। सम्बन्धित्वमत्र सम्बन्धिप्रतियोग्यनुयोगित्वरूपम्। सम्बन्धत्वञ्च विशिष्टधीविषयत्वरूपं ग्राह्यम्। तथाच सम्बन्धप्रतियोग्यनुयोगिभिन्नत्वे सति नित्यत्वे च सति सम्बन्धत्वं समवायत्वमितिपर्य्यवसितम्। तत्र प्रथमसत्यन्तस्य व्यावृत्तिं प्रदर्शयितुमाह तेन स्वरूपसम्बन्धस्येति। नित्याभावाद्यात्मकस्वरूपसम्बन्धस्येत्यर्थः। न च समवायवद्-द्रव्यमितिप्रतीत्या समवाये सम्बन्धप्रतियोगित्वभानादव्याप्तिरितिवाच्यं तत्र समवायेन द्रव्यत्वादिमद्द्रव्यमित्यर्थात्। नचानुभवविरोध इति वाच्यं कस्य समवायवदित्याकाङ्क्षा-या निवृत्तये तत्र द्रव्यत्वादिभानस्यावश्यकत्वादन्यथा गुणत्वादिसमवायस्यापि तत्र भान-प्रसङ्गात् समवायस्यैकत्वादगुणत्वादिसमवाये गुणत्वव्याप्यत्वनियमस्याप्रयोजकत्वात्। द्वितीयसत्यन्तस्य प्रयोजनमाह संयोगस्येति। यदि च संयोगस्य समवायसम्बन्ध-प्रतियोग्यनुयोगित्वसत्त्वात् प्रथमसत्यन्तदलेनैव तद्वारणं सम्भवतीत्युच्यते तदा संयोगेन घटवद्भूतलमित्यादौ संयोगत्वादेः संसर्गतावच्छेदकविधयैव भानात् संयोगस्य न प्रतियोगानुयोगित्वयाभानं किन्तुसंसर्गत्वेनैवेत्यदोषः। अत्र विशेष्यदलोपात्तसम्बन्धत्वं न लक्षणघटकं वैयर्थ्यात् किन्तु स्वरूपकीर्त्तनमात्रपरमितिध्येयम्। प्राञ्चस्त्वयुतसिद्ध-सम्बन्धः समवायः। अयुतसिद्धत्वञ्चासम्बद्धयोरविद्यमानत्वम्। एतेन संयोग-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सम्बन्धसम्बन्धिनोर्व्वदरकुण्डाद्योरिव समवायस्य सम्बन्धत्वे तत्सम्बन्धिनो र्गुणगुण्याद्यारपि विश्लेषः स्यादित्यपास्तम् ।

सम्बन्धप्रत्यक्षंप्रति सम्बन्धाश्रययावद्वयक्तिप्रत्यक्षस्य कारणत्वात् समवायस्य चैकत्वाद्द युगपद्भाविभूतसकलाश्रयप्रत्यक्षासम्भवात् समवायस्याप्रत्यक्षत्वमम्युपगच्छतां वैशेषिकणां मतसाधारण्येन समवायसिद्धौ प्रमाणमाहेहेति । प्रमाणमिति । 'इह घटे घटत्वम्' इतिवुद्धेर्व्विशिष्टवुद्धित्वेन विशेषणविशेष्यसम्बन्धविषयकत्वं वाच्यं, स च सम्बन्धोऽत्राधेयत्वरूपोऽनुभवसिद्धः, तत्र च संयोगादिसम्बन्धावच्छिन्नत्ववाधात् समवायसम्बन्धावच्छिन्नत्वमम्युपेयम्, तथाच विशेषणतावच्छेदकसंसर्गतया समवायसिद्धिरितिभावः । प्रत्यक्षस्य प्रमाणत्वसम्भवेऽनुमानाश्रयणमयुक्तमितिवदतां नैयायिकानां मतमुदाहरति नैयायिकमतइति । प्रत्यक्षइति । समवायप्रत्यक्षे लाघवत इन्द्रियसम्बद्धविशेषणताया एव हेतुत्वकल्पनाद्विशेषणतासम्बन्धेन समवायः प्रत्यक्षइति तेषामाशयः । संयोगादिवत् समवायस्य नानात्वकल्पने गौरवादाह एक इति । तथाच य एव द्रव्यत्वस्यसम्बन्धः समवायस्तस्य गुणत्वादीनां सम्वन्धत्वेऽपि द्रव्यत्वगुणत्वाद्योर्न साङ्कर्य्यमाधाराधेयभावस्य नियामकत्वाद्द्रव्ये गुणत्वादेर्गुणादौ च द्रव्यत्वस्याधिकरणताया वाधात् । अनित्यत्वे नानात्वस्य ध्वंसप्रागभावादेश्च कल्पनया गौरवादाह नित्य इति ।।३७।।

॥ * ॥ इति समवायनिरूपणविवृतिः ॥ * ॥

॥ तर्कामृतम् ॥

नन्वन्यान्यप्यन्धकारसुवर्णादीनि द्रव्याणि सन्ति, आलस्यादयो गुणा अपि सन्ति, कथं नवैवेत्यादि । मैवम् । अन्धकारो न द्रव्यं किन्तु तेजोऽभावः । सुवर्णं तेज एव । आलस्यं कृत्यभावएव । एवमन्यदपि वोध्यम् ।।३८।।

॥ * ॥ इत्यतिरिक्तपदार्थखण्डनम् ॥ * ॥

॥ विवृतिः ॥

भावत्वेन पदार्थविभागस्य कृतत्वात् संक्षेपतो भावपदार्थविचारमुपसंहर्त्तुमतिरिक्तपदार्थखण्डनमवतारयति नत्वन्यान्यापीत्यादि । अन्धकारसुवर्णादीनीति । आदिना रजतादेरुपग्रहः । द्रव्याणीति । 'नमः खलु चलं नीलं परापरविभागवत् । प्रसिद्धद्रव्यवैधर्म्यान्नवम्यो भेत्तुमर्हति' ॥ इत्युक्तेर्गन्धाद्यभावेन पृथिव्यादिष्वनन्तर्भावान्तमसः, गन्धोष्णस्पर्शादेरभावात्पीतरूपवत्त्वाच्चसुवर्णस्यातिरिक्तद्रव्यत्वसिद्धिरितिभावः । आलस्यादयइति । आदिना लघुत्वकठिनत्वादेः परिग्रहः । गुणाइति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

द्रव्यकर्म्मभिन्नत्वेसति जातिमत्त्वादितिभावः। किन्तु तेजोऽभाव इति। तमसोऽतिरिक्तत्वेऽनन्तावयवतत्तद्ध्वंसप्रागभावादिकल्पनगौरवं स्यादितिभावः। किञ्चालोकासहकृतचक्षुर्ग्राह्यत्वेन तमसोरूपवत्तायाः कल्पयितुमयुक्तत्वात्‌रूपवद्द्रव्यचाक्षुषे आलोकस्यहेतुत्वादत एव कर्म्मवत्त्वादेरप्युपपादयितुमशक्यत्वादुक्तप्रनीतेर्भ्रमत्वात्। न च तम एव द्रवं तेजस्तु तदभाव इति कथं न स्यादिति वाच्यं तेजः साधर्म्यस्पोष्णस्पर्शवत्त्वस्य शुक्लरूपादे श्चप्रतीतेरुपपादयितुमशक्यत्वात् नचासौ प्रतीतिर्भ्रमात्मिकेति वाच्यं वह्न्यादिना करादेर्दाहस्य प्रत्यक्षसिद्धत्वात्। किञ्चोत्तरकाले वाधज्ञानस्योत्पत्स्यमानत्व एव पूर्व्वप्रतीतेरप्रमान्वनियमादत्र च तादृशवाधज्ञानोत्पादस्याननुभवात्। किञ्च 'तमसाच्छन्ने तेजसा पश्यति' इत्यवाधितप्रत्ययादभावे चाक्षुषहेतुताया वाधितत्वेन तेजस एव द्रव्यत्वं नतु तमस इति ध्येयम्। सुवर्णं तेज एवेति। सुवर्णं तैजसमसति प्रतिबन्धकेऽत्यन्तानलसंयागेऽप्यनुच्छिन्नद्रवत्वाधिकरणत्वात्, यन्नैवं तन्नैवं यथा पृथिवी, इत्याद्यनुमानेन सुवर्णस्य तैजसत्वसिद्धे रिति भावः। नच सुवर्णस्य तेजस्त्वे कथमुष्णस्पर्शानुपलब्धिरिति वाच्यं पार्थिवस्पर्शेनोष्णस्पर्शस्याभिभवात्। कृत्यभाव इति। प्रवृत्त्यभाव इत्यर्थः। अतिरिक्तत्वे ध्वंसप्रागभावादिकल्पनगौरवापत्तेरितिभावः। कठिनत्वलघुत्वादेरपि संयोगविशेषाद्यात्मकत्वमभिप्रत्याह एवमिति ॥३८॥

## ॥ * ॥ इत्यतिरिक्तपदार्थखाण्डनविवृतिः ॥ * ॥

## ॥ तर्कामृतम् ॥

अभावो द्विविधः संसर्गाभावोऽन्योन्याभावश्च। आद्यस्त्रिविधः प्रागभावोध्वंसोऽत्यन्ताभावश्च। प्रागभावो विनाश्यजन्यः। ध्वंसो जन्योऽविनाशी च। अत्यन्ताभावान्योन्याभावो त्वजन्याववनाशिनौ। योग्यानुपलब्ध्याऽभावः प्रत्यक्षः। अन्यत्र त्वतीन्द्रियः ॥ ३९ ॥

## ॥ विवृतिः ॥

संक्षेपतो भावपदार्थ निरूपणानन्तरमभावं निरूपयत्यभाव इति। त्रिविधइति। तथाचैतत्रितयान्यतमत्वं भेदभिन्नाभावत्वम्वासंसर्गाभावसामान्यलक्षणमिति बोध्यम्। प्रागभावं लक्षयति विनाश्यजन्य इति। विनाशित्वं नाम नाशप्रतियोगित्वम्, तावन्मात्रस्य लक्षणत्वे घटादावतिव्याप्तिरत उक्तम जन्य इति।

अत्र जन्यत्वं कार्य्यत्वमात्रं, तदभाववानित्यर्थः। तावन्मात्रे कृते गगणादावतिव्याप्तिरतआह विनाशीति। ध्वंसं लक्षयति जन्य इत्यादि। घटादावतिव्याप्तिवारणायाविनाशीति। गगणादावतिव्याप्तिवारणाय जन्य इति। अत्यन्ताभावान्योन्याभावयोरजन्याविनाशित्वादेकोकत्याहात्यन्ताभावेत्यादि। अत्र ध्वंसवारणायाजन्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्वप्रवेशः। प्रागभाववारणायचाविनाशित्वनिवेशः। शिवादित्यास्त्वनित्यप्रतियोगिकान्योन्याभावस्योत्पादविनाशशालित्वं मन्यन्ते। वस्तुतस्तु विनाश्यभावत्वं प्रागभावत्वं, जन्याभावत्वं ध्वंसत्वं, नित्यसंसर्गाभावत्वमत्यन्ताभावत्वं, तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वमिति लघुलक्षणं, उक्तन्तुस्वरूपकीर्त्तनमात्रम्। अभावप्रत्यक्षे कारणमाह योग्यानुपलब्ध्येति। योग्यताविशिष्टानुपलब्ध्येत्यर्थः। योग्यताच प्रतियोगिसत्त्व प्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपाबोध्या। इत्थञ्च गुरुत्वाद्यभावस्य न प्रत्यक्षं नवातमसाच्छन्नभूतलादिनिष्ठघटाभावादेश्चाक्षुषं भूतलादेस्तमसाच्छन्नत्वात्तत्र घटादेरतीन्द्रियत्वाच्च गुरुत्वादेरापादयितुमशक्यत्वात् किन्तु जलादौ गन्धाभावादेर्घ्राणजमालोकसंयोगादिविशिष्टभूतलादौ घटभावादेश्चाक्षुषं भवत्येव तत्तत्तस्य तस्य तेन तेनेन्द्रियेणापादयितुं शक्यत्वात्। एवञ्च तत्तदिन्द्रियजन्यानाहार्य्य तत्तत्संसर्गकतत्तत्प्रकारकोपालम्भाभावस्तत्तदभाव प्रत्यक्षे हेतुरितिपर्य्यवसितम्। वस्तुतस्तु कस्यचित्संसर्गाभावस्य प्रत्यक्षेऽधिकरणयोग्यत्वं कस्यचिच्च प्रत्यक्षे प्रतियोगियोग्त्वं तन्त्रं वाच्यं, तेन स्तम्भादौ पिशाचत्वात्यन्ताभावस्य परमाण्वादौ महत्त्वाभावस्य च प्रत्यक्षत्वमुपपद्यते। एवं संसर्गाभावविशेषप्रत्यक्षे योग्यानुपलब्धि विशेषोहेतुर्वाच्यः। एवमन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यत्वमेव तन्त्रमुपेयम्। तथाचोक्तरीत्या पृथक् पृथक् कार्य्यकारणभाव उहनीयः फलवलादन्यथा व्यभिचारापत्तेरितिदिक्। अन्यत्रे ति। प्रतियोगिनोऽतीन्द्रियत्वेऽधिकरणस्य प्रतियोग्यापादनायोग्यत्वे वेत्यर्थः। अतीन्द्रिय इति। तथाचाभावप्रत्यक्षं प्रत्यतीन्द्रियप्रतियोगिकत्वमधिकरणस्य प्रतियोग्यापादनायोग्यत्वम्बा प्रतिबन्धकमिति भावः॥ ३९॥

॥ * ॥ इत्यभावनिरूपणविवृतिः ॥ * ॥

## ॥ तर्कामृतम् ॥

अथ प्रमा कथ्यते। सा चतुर्व्विधा प्रत्यक्षानुमित्युपमितिशाब्दभेदात्। तत्करणानि चत्वारि प्रत्यक्षानुमानोपमानशब्दभेदात्। तत्र प्रत्यक्षं द्विविधं निर्व्विकल्पकं सविकल्पकञ्च॥ ४०॥

## ॥ विवृतिः ॥

पूर्व्वं प्रमाऽप्रमाभेदेनानुभवद्वैविध्यस्योक्तत्वादिदानीमवसरतः प्रमां निरूपयितुमाहाथ प्रमेति। प्रमात्वं नाम तदाश्रयधर्म्मिकतत्प्रकारकानुभवत्वम्। यथा रजलादिधर्म्मिकरजतत्वादिप्रकारक इदं रजतमित्याद्यनुभवः प्रमा। तत्राश्रयपदेन सम्बन्धित्वपर्य्यन्तं विवक्षणीयं, तेनाश्रयाश्रितभावविरहेऽपि 'गविगोत्वम्' इत्यादि प्रमायां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नाव्याप्तिः। येन सम्बन्धेन यत्सम्बद्धित्वं तेन सम्बन्धेन तत्प्रकारत्वं वाच्यमतः संयोगेन घटवत्कपालमित्यादौ नातिव्याप्तिः। प्रमां विभजते सा चतुर्व्विधेति। विधाचतुष्टयं कीर्त्तयति ज्ञानत्वम्। उपमितित्वं नाम सादृश्यज्ञानकरणकज्ञानत्वम्। शाब्दत्वञ्च पदज्ञानकरणकज्ञानत्वम्। अथवा प्रत्यक्षत्वादिनो चत्वारि जातिविशेषाः। प्रमा-प्रसङ्गात्प्रमाणानि निरूपयितुमाह तत्करणानीति। प्रमात्वावच्छिन्नकार्यतानिरूपित-करणतावन्तीत्यर्थः। तेन ज्ञानासाधारणकारणात्मशरीरादौ नातिव्याप्तिः। चत्वारीति तेनैतिह्यादेः प्रमाणत्वनिरासः। करणत्वन्तु फलायोगव्यवच्छिन्नव्यापारवत्कारणत्वं, नतु कारणतामात्रम्, तेन सन्निकर्षादौ नातिव्याप्तिः। प्रमाणचतुष्टयं नाम्ना कीर्त्तयति प्रत्यक्षेत्यादि। तथा चेन्द्रिय-व्याप्तिज्ञान-सादृश्यज्ञान-पदज्ञानानि प्रत्यक्षादिप्रमाण-शब्दवाच्यानीत्यर्थः। प्रत्यक्षं विभजते तत्रेति। प्रमाणेषु मध्ये इत्यर्थः। निर्व्वि-कल्पकमिति। विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानत्वेन कारणत्वात् घट इत्यादि विशिष्टज्ञानजनकीभूतविशेषणज्ञानसम्पत्तये निर्व्विकल्पकं स्वीकरणीयम्। अन्यथा विशेषणज्ञानस्यापि विशिष्टज्ञानात्मकत्वे तदर्थमपि विशेषणज्ञानान्तरस्यावश्यकत्वेऽनया रीत्यानवस्थाप्रसङ्ग इतिभावः। तथाच घट इत्यादिविशिष्टज्ञानोत्पादतः पूर्व्वं प्रकार-त्वविशेष्यत्वानवगाहि 'घटघटत्वे' इत्याकारकं यज्ज्ञानं जायते तदेव निर्व्विकल्पक-मितिबोध्यम्। तच्चातीन्द्रियम्। तस्य प्रत्यक्षविषयातया उपपादयितुमशक्यत्वादिति-तात्पर्य्यम्। सविकल्पकमिति। यथा 'अयं घटः' इत्यादिज्ञानम्। एतयोर्ल्लक्षणञ्च स्वयमेव वक्ष्यति ॥ ४० ॥

॥ तर्कामृतम् ॥

प्रत्यक्षकरणानि षड़िन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि। एतानि सन्नि-कर्षसहितानि प्रत्यक्षं जनयन्ति। सन्निकर्षश्च लौकिकोऽलौकिकश्च। अलौकिक-स्त्रिविधः—ज्ञानलक्षणा सामान्यलक्षणा योगजश्च। लौकिकः षड्विधः—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणता चेति। संयोगेन द्रव्यग्रहः। संयुक्तसमवायेन शब्दान्यगुणकर्म्मद्रव्यवृत्तिजातीनां प्रत्यक्षम्। संयुक्तसमवेतसमवायेन शब्दमात्रवृत्तिजातीतरगुणकर्म्मवृत्तिजातीनां प्रत्यक्षम्। समवायेनशब्दस्य, समवेतसमवायेन शब्दवृत्तिजातीनाम्, विशेषणतयाऽभावस्य समवायस्य च प्रत्यक्षम् ॥ ४१ ॥

॥ विवृतिः ॥

प्रत्यक्षप्रमाणपदार्थान् प्रदर्शयितुमाह प्रत्यक्षकरणानीत्यादि। षड़िन्द्रियाणीति। घ्राणज-रासन-चाक्षुषत्वाच्श्रौत्रमानसभेदेन प्रत्यक्षप्रमितेः षड्विधत्वात्तत्करणान्यपि



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

षड़ित्यर्थः। एतेनैकादशेन्द्रियवादो व्युदस्तो वागादेरिन्द्रियत्वे मानाभावात्। यथावास्यादेः करणत्वेऽपि च्छेत्तृकृत्यादिसहकारिणमन्तरेण च्छिदाद्युपधानं तथात्रापीत्याशयेनाह सन्निकर्षसहितानीति। तत्साहित्यन्तु तद्भिन्नत्वे सति तज्जन्यकार्यजनकत्वरूपं बोध्यम्। सन्निकर्षश्चेति। सन्निकृष्यते-सम्बध्यतेऽनेनेति सन्निकर्षः... सम्बन्धो विशिष्टधोविशेषनियामक इति यावत्। लौकिक इति। लौकिकत्वन्तुसंयोगादिषट्कान्यतमत्वम्। एवमलौकिकत्वमपि ज्ञानलक्षणादित्रितयान्यतमत्वम्।

सूचीकटाहन्यायेनादावलौकिकसन्निकर्षविभजतेऽलौकिकस्त्रिविधइति। ज्ञानलक्षणेति। ज्ञानमेवलक्षणं यस्य स ज्ञानलक्षणः सन्निकर्षस्सत्पदार्थविषयकं ज्ञानमित्यर्थः। यद्यपि प्रत्यासन्तिपदमध्याहृत्य ज्ञानलक्षणेत्यादिस्त्रीलिङ्गनिदेशो युज्यते तथापि विशेष्यतयाभिहितस्य सन्निकर्षपदस्य पुंलिङ्गस्य सत्त्वादध्याहाराश्रयणमयुक्तमतोज्ञानलक्षण इत्यादिपुंलिङ्गपाठः करणीयः। सामान्यलक्षणेति। सामान्यं—समानानां भावः, लक्षणं—स्वरूपं विषयो वा यस्य स सामान्यधर्म्मः सामान्यविषयकज्ञानरूपो वा इत्यर्थः। योगज इति। योगेन—यमनियमाद्यष्टाङ्गकेन जनितो योऽदृष्टविशेषः स एव सन्निकर्ष इत्यर्थः। एषामुदाहरणानि स्वयमेव वक्ष्यति।

लौकिकसन्निकर्षं विभजते। लौकिकः सन्निकर्षः षड्विध इति। यद्यपि घटपटादिप्रतियोगिभेदेन संयोगादेरेव बहुत्वात् षड्विधत्वोक्तिर्न सङ्गच्छते तथापि संयोगत्वादिना तेषामैक्यान्नदोषः। विधाषट्कंदर्शयति संयोगइत्यादि। सन्निकर्षषट्कग्राह्याण्युदाहरति संयोगेनेत्यादि। चक्षुरादेर्घटादिद्रव्येण सह संयोगादुक्तं संयोगेनेति। द्रव्यग्रह इति। महत्त्वोद्भूतरूपवद्द्रव्यप्रत्यक्षमित्यर्थः। संयुक्तसमवायेनेति। चक्षुरादिसंयुक्ते घटादौसमवायसम्बन्धेनवर्त्तमानत्वादित्यर्थः। शब्दान्यगुणकर्म्मद्रव्यवृत्तिजातीनामिति। शब्दस्य शुद्धसमवायसम्बन्धेनैवग्रहाच्छब्दान्यत्वं गुणविशेषणम्। रूपादेः सम्बन्धान्तरेणाप्रत्यक्षत्वात् न्यूनत्वं स्यादतस्तद्वारणाय शब्दान्यगुणेति। तत्रापि शब्दान्यत्वस्य घटादिसाधारण्याद् गुणपदम्। द्रव्यमात्रसमवेतस्य कर्मणः सम्बन्धान्तरेण प्रत्यक्षासम्भावादाह कर्म्मेति। गुणत्वादिजातेः संयुक्तसमवायसम्बन्धासम्भवाद्द्रव्यपदम्। गगणत्वादेः समवायसम्बन्धाभावाज्जातीति। द्रव्यत्वादेः सम्बन्धान्तरेणाप्रत्यक्षत्वाद्द्रव्येत्यादि। नच घटादिनिष्ठगुरुत्वादेरपि प्रत्यक्षं स्यादितिवाच्यं द्रव्यसमवेतप्रत्यक्षं प्रति गुरुत्वाद्यन्यतमत्वेन प्रतिबन्धकत्वोपगमात्। नच नच चक्षुः संयुक्ते तन्तौ समवेतत्वात् संयुक्तसमवायसम्बन्धेन पटस्यापि प्रत्यक्षं स्यादिति द्रव्यवृत्तितयाजातिमात्रप्रवेशोऽनुपपन्न इतिवाच्यं संयोगवदप्रतियोगिकत्वे सतीत्यनेन संयुक्तसमवायस्य विशेषणीयत्वात्। संयुक्तसमवेतसमवायेनेति। चक्षुरादिसंयुक्ते घटादौ समवेतं यद्रूपादिकं तत्र समवायसम्बन्धेन विद्यमानत्वादित्यर्थः। शब्दमात्रेत्यादि।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शब्दमात्रवृत्तिशब्दत्वजातेः समवेतसमवायसम्बन्धेनैव ग्रहादाहेतरेति। गुणत्वादेरपि शब्दवृत्तिजातित्वादव्यावर्तकत्वान्मात्रपदम्। शब्दमात्रवृत्तिव्यक्तित्वादेः समवायेन ग्रहासम्भवादव्यावर्तकत्वाज्जातीति। शब्दत्वस्यगुणवृत्तिजातित्वात्तस्य च संयुक्तसमवेतसमवायसम्बन्धेन प्रत्यक्षासम्भवादितरात्तम्। गुणत्वादिजातेः सम्बन्धान्तरेणाग्रहान्न्यूनतापरिहाराय गुणपदम्। कर्म्मत्वादिजातेः शब्दमात्रवृत्तिजातीतरत्वेऽपि गुणावृत्तित्वात्सम्बन्धान्तरेणाग्रहाच्चन्न्यूनत्वं परिहर्त्तुं कर्म्मपदम्। प्रमेयत्वादेःसमवायसम्बन्धाप्रतियोगित्वाद्वितीयजातिपदम्। संयुक्तसमवायसंसर्गकप्रत्यक्षविषयद्रव्यत्वादिजातेरपिशब्दमात्रवृत्तिजातीतरत्वादाह गुणेत्यादि। समवेतसमवायेनेति। गगणसमवेतशब्दे शब्दत्वादेःसमवायसत्त्वादितिभावः। जातित्वस्य द्रव्यत्वादिसाधारणत्वादाह शब्दवृत्तीति। प्रमेयत्वादेरपि शब्दवृत्वित्वाज्जातिपदम्। विशेषणतयेति। घटाभाववद्भूतलमित्यत्राभावस्य भूतलविशेषणत्वादिर्त्यः। वस्तुतस्तु विशेषणतयेत्युपलक्षणं, तेन भूतले घटाभाव इत्यादावभावस्य विशेष्यत्वेऽपि न प्रत्यक्षत्वानुपपत्तिः। तदुक्तं न्यायवार्त्तिककृद्भिः 'समवायेऽभावे च विशेष्यविशेषणभावः' इति। समवायस्य चेति चकारेण विशेषणतयेत्यस्य समुच्चयः। इन्द्रियसम्बद्धघटादौ समवायस्य विशेषणत्वादितिभावः॥ ४२॥

## ॥ तर्कामृतम् ॥

अलौकिकः स यथा—ज्ञानलक्षणया सुरभिचन्दनमिति चाक्षुषंज्ञानम्। सामान्यलक्षणया घटत्वेन यावद्घटज्ञानम्। योगजधर्म्मेण योगिनां सर्वज्ञानम्॥ ४२॥

## ॥ विवृतिः ॥

अथालौकिकसन्निकर्षानुदाहर्तुमाहालौकिक इति। स इति। सन्निकर्ष इत्यर्थः। ननु सन्निकर्षत्वमत्रेन्द्रियप्रतियोगिकत्वमेववाच्यं, तच्च संयोगादेः सङ्गच्छते घटाद्यनुयोगिकसंयोगादिनिरूपितप्रतियोगित्वस्य चक्षुरादौ सत्त्वात्, ज्ञानलक्षणादेस्तु चक्षुरादीन्द्रियप्रतियोगिकत्वविरहात् सन्निकर्षत्वं कथमुपपद्यत इति चेत्। उच्यते। संयोगस्य सन्निकर्षत्वात्तद्घटितेन्द्रियसंयुक्तविशेष्यकज्ञानप्रकारीभूतसामान्यात्मकसामान्यलक्षणप्रत्यासत्तेः परम्परया ज्ञानलक्षणयोगजयोश्च सन्निकर्षतायाः कथञ्चिदुपपद्यमानत्वेऽपि विशिष्टधीविशेषनियामकत्वरूपस्यैवात्र सन्निकर्षत्वस्योपगमाददोषः।

अत्रेदं चिन्त्यते—यद्यपि स्मरणाद्यात्मकज्ञानलक्षणस्य, घटत्वाद्यात्मकसामान्यलक्षणस्य, योगजधर्म्मात्मकस्य च सन्निकर्षस्येन्द्रियाजन्यत्वाद्व्यापारत्वविरहेणेन्द्रियस्यालौकिकप्रत्यक्षकरणत्वं नोपपद्यते व्यापारवत एव कारणस्य करणत्वनियमात्। न च परमार्थतः सामान्यविषयकज्ञानस्यैव सामान्यलक्षणप्रत्यासत्तित्वात्तूयाणामेव-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परम्परयेन्द्रियजन्यत्वाद्व्यापारत्वं सङ्गच्छते इति वाच्यं तथा सति परामर्शादेरपि परम्परयेन्द्रियजन्यत्वात्तेनेन्द्रियस्यानुमितिकरणतापत्तेः तथापीन्द्रियजन्यस्य संयोगस्य व्यापारत्वमुपगम्य तेनैवेन्द्रियस्य करणताया उपपादनीयत्वात् ।

सुरभि चन्दनमिति । सुरभिचन्दनमितिचाक्षुषज्ञाने सौरभस्य भानार्थं ज्ञानलक्षणः सन्निकर्षोऽभ्युपेय इतिभावः । तथाहि चन्दनचाक्षुषे जायमाने चन्दननिष्ठतया सौरभस्योपस्थितावपि सौरभांशे योग्यवृत्तित्वविशिष्टचक्षुःसन्निकर्षाभावेन तदुपस्थिते-श्चाक्षुषत्वाभावाद् घ्राणजत्वं मानसत्वम्वा वक्तव्यम् । सौरभोपस्थितिरत्रज्ञानलक्षणः-सन्निकर्षः । तेन च सन्निकर्षेण सहकारिणा चक्षुरिन्द्रियं सुरभि चन्दनमिति प्रत्यक्षं-जनयति । न च चक्षुःसंयुक्ते चन्दने समवेतत्वात् संयुक्तसमवायसम्बन्धेनैव सौरभस्य ग्रहसम्भवात्तदर्थमलौकिकःसन्निकर्षोनाश्रयणीय इति वाच्यं तत्रोक्तसम्बन्धस्य तच्चाक्षुषविषयतानियामकत्वानभ्युपगमादन्यथा लौकिकसन्निकर्षजन्यत्वेन तस्य तदंशे लौकिकत्वप्रसङ्गात् सौरभं पश्यामीत्यनुव्यवसायापत्तेः । न च स्मरणनिर्विकल्पक-साधारणसामान्यविषयकज्ञानस्यैव वस्तुगत्यासामान्यलक्षणसन्निकर्षताया अभ्युयेतव्य-त्वादत्र च सौरभत्वरूपसामान्यविषयकज्ञानात्मकसामान्यलक्षणसन्निकर्षेण सौरभस्य भानसम्भवाज्ज्ञानलक्षणसन्निकर्षः स्वीकरणीयो न स्यादितिवाच्यं तथासति सुरभिचन्दन-मितिचाक्षुषे सोरभत्वांशेधर्म्मान्तरस्यागृहीततया स्वरूपतः सौरभत्वस्यसामान्यलक्षण-सन्निकर्षेण भानासम्भवात्तद्भानार्थमेव ज्ञानलक्षणसन्निकर्षस्यावश्यं स्वीकरणीयत्वात् । चाक्षुषं ज्ञानमिति । ज्ञानत्वस्य स्मृत्यनुमित्यादिसाधारण्यान्तत्र च ज्ञानलक्षणसन्निकर्षा-नपेक्षणादाह चाक्षुषमिति ।

सामान्यलक्षणसन्निकर्षमुदाहरति सामान्यलक्षणयेत्यादि । वहिरिन्द्रियेण सामान्य-लक्षणया ज्ञाने जननीये सामान्यस्वरूपं वहिरिन्द्रियसम्वद्धविशेष्यकज्ञानप्रकारीभूतं, मनसा तज्जनने तु ज्ञानप्रकारीभूतमिति बोध्यम् । वस्तुतस्तु इन्द्रियसम्बन्धं विनापि तादृशसामान्यस्य सत्त्वात् सामान्यलक्षणसन्निकर्षेण यावतां तदाश्रयानां ज्ञानापत्ति-स्तत्तत्पटादिरूपसामान्यनाशे तत्तत् पटवतां यावतां भानानुपपत्तिश्चातः सामान्य-विषयकज्ञानस्यैव सन्निकर्षत्वमुपेयं नतु सामान्यस्येति ध्येयम् । नचैवमनयोः सन्निकर्षयोरभेद इति वाच्यं आद्यस्य यद्विषयकं ज्ञानं तस्यैव सन्निकर्षत्वात्, द्वितीयस्य तु यत्प्रकारकं ज्ञानं तदाश्रयाणां सन्निकर्षत्वादिति भेदस्य स्फुटत्वात् ।

योगजसन्निकर्षमुदाहरति योगजधर्म्मेणेत्यादि । सर्वज्ञानमिति । योगजधर्मानु-गृहीतेन मनसा योगिनोऽणुगगणाद्यखिलपदार्थविषयकं ज्ञानं जन्यते इति भावः । ते च योगिनो द्विविधाः । तत्र केषान्तावदसमाहितान्तःकरणानां ध्यानेन सर्व-विषयाधिगमः । अपरेषान्तूपसंहृतसमाधीनां सर्वदा सर्वविषयकप्रत्यक्षम् । तदुक्तं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

महर्षिणा कणादेन 'असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषाञ्च' इति। सिद्धान्तमुक्तावलीकारैस्तु युक्तयुञ्जानसंज्ञाभ्यां ते द्विविधा योगिनो व्यपदिश्यन्ते। तदुक्तं 'योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः। युक्तस्य सर्व्वदा भानं चिन्तासहकृतोऽपरः ॥ इति। अत्रकेचित् योगजसन्निकर्षेणापि योगिनामतीन्द्रियपदार्थविषयकं प्रत्यक्षं न जन्यते किन्त्वैन्द्रियकविषयकमेवेतिवदन्तः 'यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्। दूरसूक्ष्मादिवृद्धौ स्यात्तद्रूपे श्रोत्रवृत्तिता' ॥ इत्याचार्यवचनमुदाहरन्ति ॥ ४२ ॥

## ॥ तर्कामृतम् ॥

तत्र निर्विकल्पकं विशेष्यप्रकारादिरहितं वस्तुस्वरूपमात्रज्ञानम्। सविकल्पकं सप्रकारकम्। भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम्। यथा 'अयं घटः' इत्यत्र अयं विशेष्यः, घटत्वं प्रकारः, भासमानवैशिष्ट्यं तयोः समवायः, तस्य प्रतियोगिघटत्वम् सविकल्पकमेव विशिष्टवैशिष्ट्यज्ञानं, यथा 'अयं दण्डी' इत्यत्र दण्डत्वविशिष्टस्य वैशिष्ट्यं पुरुषे भासते। अथ प्रक्रिया—तत्रादाविन्द्रियसन्निकर्षाद् 'घटघटत्वे' इति निर्विकल्कं, ततः 'अयं घटः' इतिविशिष्टज्ञानम् ॥ ४३ ॥

## ॥ विवृतिः ॥

प्रागुक्तं निर्व्विकल्पकादिकं लक्षयितुमाह तत्रेत्यादि। तत्र-द्विविधप्रत्यक्षमध्ये। लक्षणमाहविशेष्येत्यादि। निरूपकत्वसम्बन्धेन विशेष्यत्वादिशून्यं ज्ञानमित्यर्थः। तेन प्रकारताद्यवच्छेदकसम्बन्धेन प्रकारादिशून्यत्वस्य सविकल्पके सत्त्वेऽपि नातिव्याप्तिः। वस्तुस्वरूपेत्यादिकन्तु स्वरूपकथनमात्रम्। सविकल्पकं लक्षयति सप्रकारकमित्यादि। निरूपकत्वसम्बन्धेन प्रकारतादिविशिष्टं ज्ञानमित्यर्थः। निर्विकल्पकादिलक्षणघटकप्रकारत्वं निर्वक्तिभासमानेत्यादि। भासमानत्वं नाम ज्ञायमानत्वम्। वैशिष्ट्यं—सम्बन्धः। विशेष्यादिकमभिनीय दर्शयितुमाह यथेत्यादि। इत्याकारकप्रत्यक्षे इत्यर्थः। तेन तथाविधशाब्दे घटत्वस्याप्रकारत्वेऽपि न क्षतिः। तस्य प्रतियोगीति। समवायसम्बन्धस्य प्रतियोगीत्यर्थः। नात्र घटत्वांशे घटत्वत्वं भासितुमर्हति अनुल्लिख्यमानजातेः स्वरूपतो भाननियमात्। तत्र प्रतियोगित्वादिकं स्वरूपसम्बन्धविशेषः। विशिष्टज्ञानस्येव विशिष्टवैशिष्ट्यावगाहि ज्ञानस्यापि सविकल्पकत्वं निर्दिशति सविकल्पकमेवेति। एवकारेण निर्व्विकल्पकत्वव्यवच्छेदः। दण्डत्वविशिष्टस्येति। अत्र दण्डत्वं विनैव दण्डस्य भानं स्यादिति तु न शङ्क्यं जात्यखण्डोपाध्यतिरिक्तपदार्थानां किञ्चिद्धर्म्मप्रकारेण भाननियमात्। इयांस्तु विशेषो यद्विशिष्टबुद्धिं प्रति विशेषण-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ज्ञानत्वेन विशिष्टवैशिष्ट्यावगाहि बुद्धिं प्रति च विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन कारणत्वमिति ॥ ४३ ॥

## ॥ तर्कामृतम् ॥

तत्र परतः प्रामाण्यग्रह इति नैयायिकाः। यथा आदौ 'घटः' इति व्यवसायः, ततः 'घटमहं जानामि' इत्यनुव्यवसायः, ततः 'प्रामाण्याप्रामाण्ये' इति कोटिद्वयस्मरणम्, अथ चतुर्थे 'इह ज्ञानं प्रमा न वा' इति प्रामाण्यसंशयः, ततो विशेषदर्शनानन्तरं प्रामाण्यग्रहः—इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् ज्ञानान्तरवत् ॥ ४४ ॥

## ॥ विवृतिः ॥

यथार्थानुभवनिष्ठं प्रामाण्यं स्वतोग्राह्यं परतो वेति विप्रतिपत्तौ सयुक्तिकं नैयायिकमतमादाववतारयति तत्रेत्यादि। तत्रेति। विशिष्टज्ञाने इत्यर्थः। तेन निर्विकल्पकस्य प्रमात्वादिविरहेऽपि न क्षतिः। परत इति। अनुमानेनेत्यर्थः। प्रामाण्येति। तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वेत्यर्थः। तत्र प्रक्रियां प्रदर्शयति यथेत्यादि। अनुव्यवसाय इति। निर्विकल्पकभिन्नानुव्यवसायस्य सर्वानुभवसिद्धत्वादितिभावः। कोटि-द्वयस्मरणमिति। प्रामाण्यादेर्न्नियतज्ञानधर्म्मत्वाभावात्तदनुपस्थितौ तस्य ग्रहीतुमशक्यत्वादिन्द्रियसन्निकर्षाद्यभावेनानुभवासम्भवाच्च स्मरणात्मकत्वानुधावनम्। इदं ज्ञानमिति। पूर्वोत्पन्नं ज्ञानमित्यर्थः। तेनोक्तघटज्ञानस्येदानीमसत्त्वेऽपि न क्षतिः। प्रामाण्यसंशय इति। प्रामाण्याप्रामाण्यसहचरितज्ञानत्वादिरूपसाधारणधर्मदर्शनादिघटितसामग्रीबलेनेत्यर्थः। विशेषदर्शनेति। प्रामाण्यव्याप्यसमर्थप्रवृत्तिजनकत्ववत्तानिश्चयेत्यर्थः। अनन्तरं प्रामाण्यग्रह इति। तथाच व्यवसायोत्पत्तिषष्ठक्षणे प्रामाण्यानुमितिरितिभावः। विसम्वादिप्रवृत्तिजनकत्वस्य भ्रमेऽपिसत्त्वाद्व्यभिचारापत्तेराह समर्थेति। तद्वद्विशेष्यकतत्प्रकारकेत्यर्थः। इदन्त्ववधातव्यं—यत्र शुक्तिकायामिदं रजतमिति व्यवसायस्तत्राप्युक्तरीत्या षष्ठक्षणे तज्ज्ञानेऽप्रामाण्यमनुमेयम् ॥ ४४ ॥

## ॥ विवृतिः ॥

स्वतः प्रामाण्यग्रह इति त्रयो मीमांसकाः। तत्र गुरुमते 'अयं घटः' इति ज्ञानं विषयमात्मनं ज्ञानप्रामाण्यञ्चगृह्णाति। मुरारिमिश्रमते 'अयं घटः' इति ज्ञानानन्तरं 'घटमहं जानामि' इत्यनुव्यवसायस्तैनैव प्रामाण्यग्रहः। भट्टमते ज्ञानस्यातीन्द्रियत्वेन ज्ञानमनुमेयं यथा तथा तद्वृत्तिप्रामाण्यञ्च। तथाहि 'अयं घटः' इति ज्ञानानन्तरं घटे ज्ञातता उत्पद्यते, ततो 'ज्ञातो मया घटः' इति ज्ञातताप्रत्यक्षं, ततो व्याप्यादिप्रत्यक्षा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नन्तरं ज्ञानानुमानं यथा—अहं घटत्वप्रकारकज्ञानवान घटत्वप्रकारकज्ञाततावत्त्वात्। तावतैव तस्य धर्मधर्मिविषयकत्वेन प्रामाण्यानुमानम् ॥ ४५ ॥

॥ * ॥ इति प्रत्यक्षनिरूपणम् ॥ * ॥

॥ विवृतिः ॥

अथ प्रामाण्यस्य स्वतोग्राह्यत्वं वदतां मतमुपन्यस्यति स्वत इति। अत्र स्वतस्त्वं तदप्रामाण्याग्राहकज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वम्। तादृशग्रहश्च गुरुमते व्यवसायो मुरारिमिश्रमतेऽनुव्यवसायी भट्टमते च ज्ञाततालिङ्गकानुमितिरिति वक्ष्यति। तत्रेति। मीमांसकानां मध्य इत्यर्थः। गुरुमत इति। प्रभाकरमतइत्यर्थः। ज्ञानमिति। व्यवसाय इत्यर्थः। तच्च गृह्णातीत्यत्रात्वेति। विषयमिति। घटादिकमित्यर्थः। आत्मानमिति। ज्ञातारं स्वम्वेत्यर्थः। तत्र ज्ञातृग्राहकत्वं नियमतः स्वग्राहकत्वञ्च स्वप्रकाशात्मकत्वादुपपद्यत इति भावः। एवञ्चोक्तज्ञाने घटत्ववद्विशेष्यकत्वावच्छिन्न-घटत्वप्रकारकत्वस्य सत्त्वात् स्वप्रकाशत्मकेन तेन तद्ग्रहः सुघट इत्याशयेनाह ज्ञानप्रामाण्यञ्चेति। नचैवं धज्ज्ञाननिष्टप्रमेयत्वादिकमपि तेनैव ज्ञानेन गृह्यतामिति-वाच्यं नियमत एतत्त्रितयग्राहकत्वस्यैवोपगमात्। गुरुमतेऽनुव्यवसायस्य निष्प्रयोजन-कत्वेनाप्रामाणिकत्वादितिभावः। केचित्तु गुरुमते 'घटत्वेन घटमहं जानामि' इत्याकारक एव व्यवसायः ननु 'अयं घटः' इत्याकारकोऽत आत्मग्राहकत्वं तस्य सुलभमित्याहुः।

तेनैवेति। प्रथमज्ञानविषयकेनानुव्यवसायेनैवेत्यर्थः। प्रामाण्यग्रह इति। न च ज्ञानगोचरज्ञानस्यानुव्यवसायस्य विषयाविषयकत्वनियमात् कथं विषयघटितप्रा-माण्यविषयकत्वं सङ्गच्छत इति वाच्यं एतन्मतेऽनुव्यवसायस्य विषयविषयकत्वनियत-ज्ञानविषयताकप्रत्यक्षात्मकत्वोपगमात्।

भट्टमत इति। कुमारिलभट्टमत इत्यर्थः। अतीन्द्रियत्वेनेति। ज्ञानत्वेन प्रत्यक्षप्रतिवन्धकत्वे लाघवादितिभावः। प्रामाण्यञ्चेति। अनुमेयमित्यत्रात्वेति। ज्ञान-प्रामाण्ययोरनुमानप्रकारं प्रदर्शयितुं भूमिकामारचयति तथाहीति। ज्ञाततोत्पद्यत इति। ज्ञातता चातिरिक्तः पदार्थः स्वरूपसम्बन्धविशेषो वा। ज्ञातताप्रत्यक्षमिति। तथाच लिङ्गदर्शनसम्पत्तिरिति भावः। व्याप्यादिप्रत्यक्षमिति। तथाच परामर्श-सम्पत्तिरितिभावः। अत्र पूर्व्वं ज्ञातताज्ञानयो व्याप्तेः स्मरणमपि कल्प्यम्। प्रत्य-क्षात्मकपरामर्शसम्भवे स्मरणात्मकपरामर्शकल्पनमयुक्तमिति सूचयितुं प्रत्यक्षपदम्। घटत्वप्रकारकज्ञाततावत्त्वादिति। अत्र स्वाश्रयविषयकज्ञानवत्त्वसम्बन्धेन हेतुत्वं ग्राह्यं, तेन न स्वरूपासिद्धिरितिबोध्यम्। नन्वेतावता ज्ञानानुमितावपि कथं प्रामाण्यानुमितिः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सिध्यतीति शङ्कां निराकर्त्तुमाह तावतैवेत्यादि घटत्वप्रकारकज्ञानवानिति घटत्वप्रकारकज्ञाने घटान्यविशेष्यकत्वबाधात् तत्सहकारेण घटविशेष्यकत्वस्यापि सिद्धेर्घटत्वप्रकारत्वावच्छिन्नघटविशेष्यकत्वसिद्धिरितिभावः। तस्येति। घटत्वप्रकारकज्ञानानुमित्यात्मकोक्तज्ञानस्येत्यर्थः। उक्तानुमितेः प्रामाण्यानुमित्यात्मकत्वे युक्तिमाह धर्मधर्म्मीत्यादि ।। तथा च धर्मप्रकारकत्वावच्छिन्नधर्मिविशेष्यकत्वस्य प्रामाण्यपदार्थत्वात् 'अहं घटत्वप्रकारकज्ञानवान्' इत्यनुमितेश्चोक्तरीत्या तथात्वात् प्रामाण्यानुमितिरपोतिभावः। अन्ये तु भट्टमते घटो घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयो घटत्वप्रकारकज्ञानतावत्त्वात् इत्यनुमानप्रकारं वर्णयन्ति।

प्रामाण्यस्य स्वतोग्राह्यत्वेऽनभ्यासदशायां घटज्ञानं प्रमा न वेत्याद्याकारकस्य सर्वानुभवसिद्धस्य संशयस्यानुपपत्तिर्गुरुमते प्राथमिकघटादिग्रहेण, मिश्रमते प्राथमिक ज्ञानानुव्यवसायेन, भट्टमते च प्राथमिकज्ञानानुमित्या, प्रामाण्यस्य निश्चितत्वात्। किञ्च ज्ञानस्य स्वप्रकाशात्मकत्वकल्पनेऽतिरिक्त ज्ञातताकल्पने च गौरवं मानाभाव श्चेत्यादि दूषणं द्रष्टव्यम् ॥ ४५ ॥

॥ * ॥ इति प्रत्यक्षनिरूपणविवृतिः ॥ * ॥

## ॥ तर्कामृतम् ॥

अनुमितिकरणमनुमानम्। अनुमितित्वं जातिः। व्यापारवत् कारणं करणम्। व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकः। हेतुज्ञानादि करणम्, परामर्शो व्यापारः। परामर्शश्च व्याप्तिविशिष्टपक्षधर्म्मताज्ञानम्, यथा 'वह्निसामानाधिकरण्यग्रहे सति 'धूमो वह्निव्याप्यः' इत्यनुभवो जायते, ततः कालान्तरे पर्वते धूमे दृष्टे सति व्याप्तिस्मरणं, ततश्च व्याप्तिविशिष्टवैशिष्ट्यज्ञानं 'वह्निव्याप्यधूमवानयम्' इति तृतीय लिङ्गपरामर्शः, पक्षतासहितेन तेन 'पर्वतो वह्निमान्' इत्यनुमितिर्जन्यते ॥ ४६ ॥

## ॥ विवृतिः ॥

अथ प्रत्यक्षोपजीवकत्वसङ्गत्या प्रत्यक्षानन्तरमनुमानं निरूपयत्यनुमितिकरणमिति। अनुमानलक्षणस्यानुमितिघटितत्वादनुमितित्वं निर्व्वक्त्यनुमितित्वं जातिरिति। अनुमिनोमीत्यनुव्यवसायसिद्धिरितिभावः। करणलक्षणमाह व्यापारवदिति। करणलक्षणघटकीभूतव्यापारत्वं निरूपयति तज्जन्यत्व इति। स्वस्मिन्नतिव्याप्तिवारणाय सत्यन्तम्। परम्परया स्वजन्येऽतिव्याप्तिवारणाय विशेष्यदलम्। हेतुज्ञानादीति। विशेषज्ञानविधया कारणत्वस्य करणत्वनियामकत्वे हेतुज्ञानस्येव साध्यज्ञानादेरपि परामर्शे कारणत्वात् करणत्वापत्तिरत उक्तमादीति। तेन व्याप्तिधिय उपग्रहः। परामर्शो

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

व्यापार इति। एतच्च प्रायिकत्वाभिप्रायेण। तेन स्मरणात्मकपरामर्शाद् यत्रानुमितिस्तत्र लिङ्गज्ञानाद्यसत्त्वादसाधारणकारणतया परामर्शस्यैवानुमानत्वमितिध्येयम्। परामर्शं लक्षयति व्याप्तिविशिष्टपक्षधर्मताज्ञानमिति। व्याप्तिशिष्टप्रकारकारकपक्षविशेष्यकज्ञानमित्यर्थः। तेन वह्निव्याप्यधूमवानयमिति ज्ञानस्य पक्षवृत्तित्वानवगाहनेऽपि न क्षति र्न वा वह्निव्याप्यो धूमो धूमवांश्च पर्वत इति समूहालम्बनेऽतिव्याप्तिः। ज्ञानपदं, निर्णयपरं,तेनसंशयव्यावृत्तिः। परामर्शमभिनीय दर्शयति यथेति। परामर्शोत्याहप्रक्रियां प्रदर्शयितुमाहादावित्यादि। सर्वत्र सहचारग्रहस्य न व्याप्तिग्राहकत्वं किन्तु व्यभिचारविरहसहकृतस्यैवेति सूचयितुं महानसादाविति। धूमे दृष्टे सतीति। तथाच लिङ्गदर्शनरूप प्रथमलिङ्गसम्पत्तिः। अतएव तृतीयलिङ्गपरामर्शेत्यत्र तृतीयपदमपि। व्याप्तिस्मरणमिति। पूर्वानुभूतव्याप्तिस्मरणमित्यर्थः। एतच्चद्वितीयलिङ्गमितिबोध्यम्।

इदन्त्ववधातव्यम्—न सर्वत्र पक्षविशेष्यकपरामर्शादनुमितिः ; प्राचां मतेऽत्र वह्निव्याप्यधूम इत्याकारकपक्षविशेषणकपरामर्शादप्यनुमितेरभ्युपगमादतः साध्यव्याप्यविषयतानिरूपितपक्षविषयताशालिनिश्चयत्वमेव परामर्शत्वं वाच्यम्। येतु विशिष्टवैशिष्ट्यावगाहिपरामर्शस्य नानुमितिकरणत्वं किन्तु हेतुमान् पक्ष इति प्रत्यक्षेण साध्यव्याप्यो हेतुरिति स्मरणेन च द्वाभ्यामेवानुमितिरिति वदन्ति तेषां शाब्दात्मकस्य स्मरणात्मकस्य वा विशिष्टवैशिष्ट्यावगाहिपरामर्शस्य सत्त्वेऽनुमित्युत्पादानुपपत्तेरनुभवापलापापत्तिः कार्यकारणभाववाहुल्याद्गौरवञ्चेति। सिद्ध्यात्मकपरामर्शसत्त्वेऽप्यनुमित्युत्पत्तेराह पक्षतासहितेनेति। तेन संशयोत्तरप्रत्यक्षे नातिव्याप्तिः ॥ ४६ ॥

## ॥ तर्कामृतम् ॥

व्याप्तिश्च हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्। न चायं संयोगवान्द्रव्यत्वादित्यत्राव्याप्तिः, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यमित्यर्थात्। पक्षता च सिषाधयिषाविरहकृतसिद्ध्यभावः ॥ ४७ ॥

## ॥ विवृतिः ॥

परामर्शघटकीभूतव्याप्तिस्वरूपं निरूपयतिहेतुसमानाधिकरणेत्यादि। समानमधिकरणं ययोरिति व्युत्पत्त्या साधिकरणनिरूपितवृत्तित्वं समानाधिकरणत्वम्। तथाच हेतोरधिकरणे वृत्तिर्योऽत्यन्ताभावस्तस्य यः प्रतियोगी तद्भिन्नं यत् साध्यं तदधिकरणनिरूपितवृत्तित्वं हेतोर्व्याप्तिरित्यर्थः। भवति च वह्निमान् धूमादित्यत्र धूमो हेतुः, वह्निः साध्यः, ततश्च धूमस्याधिकरणे पर्वतादौ वह्निर्नास्तीत्यन्ताभावस्या-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वर्त्तमानत्वाद् घटोनास्तीत्याद्यभावस्यविद्यमानत्वद् घटाद्यत्यन्ताभावोहेतुसमानाधिकरणात्यन्ताभावस्तस्य प्रतियोगी घटादिस्तद्भिन्नो वह्निः साध्यस्तदधिकरणीभूतं यत् पर्वतादि तन्निरूपितवृत्तित्वं धूमस्यास्तीति धूमहेतौ लक्षणसमन्वयः। धूमवान् वह्नेरित्यत्र व्यभिचारिणि चायोगोलकस्यापि वह्न्यधिकरणत्वात्तत्र च धूमो नास्तीत्यभावस्वस्य सत्त्वाद्धेतुसमानाधिकरणोऽत्यन्ताभावो धूमाभाव एवेतितत्प्रतियोगिभिन्नत्वस्य धूमेऽसत्त्वाद्वह्निरूपहेतौ न लक्षणसमन्वयः। अव्याप्तिरिति नचेत्यत्रान्वेति। संयोगस्याव्याप्यवृत्तित्वाद्द्रव्यत्वरूपहेतोरधिकरणे घटादौ संयोगाभावस्य सत्त्वात् साध्याभाव एव हेतुसमानाधिकरणाभाव इति तत्प्रतियोगिभिन्नत्वस्य साध्येऽसत्त्वाल्लक्षणागमनमिति। इमामव्याप्तिं वारयितुं हेतुसमानाधिकरणाभावे प्रतियोगिव्यधिकरणत्वं निवेशयति प्रतियोगिव्यधिकरणेति। तदर्थश्च प्रतियोग्यनधिकरणीभूतं यद्धेत्वधिकरणं तद्वृत्तित्वम्। तथा च संयोगाभावस्य यः प्रतियोगी संयोगो हेत्वधिकरणस्यघटादेस्तदनधिकरणत्वसत्त्वात् प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावो न संयोगाभावः किन्तु पटाद्यभाव एवेतितत्प्रतियोगि यत्पटादिकं तद्भिन्नत्वस्य साध्ये सत्त्वादयं संयोगवान् द्रव्यत्वादित्यत्र नाव्याप्तिः। अत्र च कालो घटवान् महाकालत्वादित्यदौ प्रतियोगिव्यधिकरणाभावाप्रसिद्धयाऽव्याप्तेर्वारणप्रकारः सिद्धान्तलक्षणदीधितौ बुद्धिकुशलैर्द्रष्टव्यः।

पक्षतासहितेनेत्युक्तं, तत्र का नाम पक्षतेत्याकाङ्क्षायामाह पक्षताचेति। वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यधूमवान् पर्वतो वह्निमांश्चेति सिद्धात्मकपरामर्शसत्त्वे सिषाधयिषादशायां पर्वतो वह्निमानित्यनुमितेरुत्पादाय सहक्कृतान्तं सिद्धिविशेषणम्। सिषाधयिषा च साधयितुमिच्छा। सा च पर्व्वतो वह्निमानित्यत्र पर्व्वते वह्न्यानुमितिर्जायतां, वह्न्यनुमितिर्जायतां, अशाब्दज्ञानं जायतामित्यादि नानाविधा ग्राह्या। एवमन्यत्रापि। सिषाधयिषासत्त्वेऽनुमित्युत्पादात् सिषाधयिषाविरहमात्रं न पक्षतेत्यत आह सिद्ध्यभाव इति। सिद्धिश्च पक्षसाध्यवैशिष्ट्यनिश्चयो नतु साध्यवत्त्वप्रप्रकारकनिश्चयमात्रम्। तेनासत्यां सिषाधयिषायां साध्यविशेष्यकसिद्धिसत्त्वेऽनुमित्यनुत्पादः। सिषाधयिषां विनापि घनगर्ज्जितेन मेघानुमानात् सिषाधयिषामात्रं न पक्षतेत्यत उक्तं विरहेत्यादि। एवञ्च समवायसम्बन्धावच्छिन्नप्रतियोगिताको यः सिषाधयिषाभावः स्वरूपसमवायैतदुभयसम्बन्धघटितसामानाधिकरण्यसम्बन्धेन तद्विशिष्टा या सिद्धिः समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्तस्या अभावः पक्षतेति फलितम्। एवञ्च सिद्धेरसत्त्वे सिषाधयिषायां सत्यामसत्याञ्च पक्षता, सिद्धिसत्त्वेतु सिषाधयिषायां सत्यामेव पक्षता, असत्यां सिषाधयिषायां केवलसिद्धिसत्त्वे च न पक्षता सिषाधयिषाविरहविशिष्टसिद्धेरनुमितिप्रतिबन्धकत्वादिति संक्षेपः॥ ४७॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## ॥ तर्कामृतम् ॥

अनुमानं द्विविधं स्वार्थं परार्थञ्च। तत्र परार्थं पञ्चावयवसाध्यम्। अवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि। यथा 'अयं वह्निमान्' 'धूमात्' 'यो यो धूमवान् स वह्निमान् यथा महानसम्' 'वह्निव्याप्यधूमवानयम्' 'तस्माद्वह्निमान्' इति। स्वार्थं च स्वीयव्याप्त्यादिज्ञानसाध्यं, न तत्र परप्रतिपत्त्यर्थमेवमाहुश्शब्दप्रयोगम् ॥४८॥

## ॥ विवृतिः ॥

अनुमानं निरूप्य तद्विभजतेऽनुमानं द्विविधमिति। स्वार्थमिति। स्वकीयानुमितिजनकमित्यर्थः। परार्थमिति। परकीयानुमितिजनकमित्यर्थः। परप्रतिपादनस्य शब्दप्रयोगसाध्यत्वात्प्रतिज्ञादिपञ्चवाक्यप्रयोगस्यावश्यकतया प्रयुक्तैः पञ्चभिस्तैरेकवाक्यतापन्नैः स्वार्थविषयकः शब्दबोधो जन्यते, ततश्च तेन सहकारिणा मनसा मध्यस्थस्य चरमपरामर्श उत्पाद्यत इति परार्थानुमानक्रममभिप्रेत्याह पञ्चावयवसाध्यमिति। पञ्चपदं दशावयववादादिव्युदासार्थं जिज्ञासादेरवयवत्वे मानाभावादित्यर्थः। अवयवत्वञ्च न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वादिरूपम्। अवयवान् विभजते प्रतिज्ञेत्यादि। तत्र केवल साध्यवत्पक्षबोधकवाक्यत्वं प्रतिज्ञात्वम्। पञ्चम्यन्तलिङ्गप्रतिपादकवचनत्वं हेतुत्वम्। प्रकृतसाध्यसाधनव्याप्तिप्रतिपादकवाक्यत्वमुदाहरणत्वम्। प्रकृतपक्षधर्मिकप्रकृतसाध्यव्याप्तिविशिष्टप्रकृतहेतुमत्त्वप्रकारकबोधजनकवाक्यत्वमुपनयत्वम्। प्रकृतसाध्यव्याप्यप्रकृतसाधनज्ञानज्ञाप्यप्रकृतसाध्यवत्प्रकृतपक्षबोधकवाक्यत्वं निगमनत्वम्। सर्व्वत्र न्यायान्तर्गतत्वनिवेशान्नोदासीनवाक्येष्वतिव्याप्तिः। दिङ्मात्रमिदमुक्तं, विस्तरस्तु तत्त्वचिन्तामण्यादावनुसन्धेयः। क्रमशः पञ्चवाक्यान्यभिनीय दर्शयति यथेत्यादि। स्वयं स्वार्थादिपदार्थस्यानुक्तत्वादाह स्वार्थञ्चेत्यादि। व्याप्त्यादीत्यादिना साधनादेः परिग्रहः। स्वार्थानुमाने वाक्यपञ्चकप्रयोगस्य निष्प्रयोजनकत्वादाह न तत्रेत्यादि। तत्र—स्वार्थानुमाने। परप्रतिपत्त्यर्थं—मध्यस्थस्य परामर्शोत्पादार्थम्। एवं—उक्तप्रकारम्। शब्दप्रयोगं—पञ्चवाक्यप्रयोगं, न आह इति योजना। स्वार्थानुमाने प्रतिपित्सोर्मध्यस्थस्य चाभावादितिभावः। ॥ ४८ ॥

## ॥ तर्कामृतम् ॥

तच्चानुमानं त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्। यत्र साध्यव्यतिरेको न कुत्राप्यस्ति स केवलान्वयी, यथा 'घटोऽभिधेयः प्रमेयत्वात्' इत्यत्राभिधेयत्वस्य साध्यस्य व्यतिरेको न कुत्राप्यस्ति। यत्र साध्यप्रसिद्धिः पक्षातिरिक्ते

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नास्ति स केवलव्यतिरेकी, यथा 'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्'। यत्रे-तरभेदाभावस्तत्र पृथिवीत्वाभावो यथा जलादौ। व्यतिरेकव्याप्तौ तु साध्याभावो व्याप्यो हेत्वभावो व्यापकः। यत्र साध्यं साध्याभावश्चान्यत्रप्रसिद्धः सोऽन्वयव्यतिरेकी, यथा 'पर्वतो वह्निमान् धूमात्'। इति। अन्वयव्यतिरेकिहेतावश्यं पञ्चरूपोपपन्नतापेक्षणीया। पक्षवृत्तित्वं, सपक्षसत्त्वं, विपक्षव्यावृत्तत्वं, अबाधितत्वं, असत्प्रतिपक्षितत्वञ्चेति पञ्चरूपाणि। केवलान्वयिनि विपक्षव्यावृत्तत्वरहितं, केवलव्यतिरेकिणि सपक्षसत्त्वरहितं चतूरूपमेवापेक्षितम्। यत्र साध्यसन्देहः स पक्षः। यत्र साध्यनिश्चयः स सपक्षः। यत्र साध्याभावनिश्चयः स विपक्षः। साध्याभाववान्पक्षो बाधः। साध्यविरोधिसाधको हेतुः सत्प्रतिपक्षः ॥ ४९ ॥

## ॥ विवृतिः ॥

पुनर्विभजते तच्चानुमानमिति। स्वार्थपरार्थयोः प्रत्येकमित्यर्थः। विधात्रयं दर्शयति केवलान्वयीत्यादि। केवलान्वयिपदार्थं निर्वक्ति यत्रेत्यादि। यच्छब्दो हेतुपरः, सप्तम्यर्थोनिरूपितत्वं तस्य च साध्येऽन्वयः, साध्यस्येति लुप्तषष्ठ्या निष्ठत्वमुपस्थाप्यते, व्यतिरेक इति प्रथमार्थः प्रतियोगित्वं, तस्य च नञर्थेऽभावेऽन्वयः, कुत्रेतिसप्तम्यर्थो वृत्तित्वं तस्य च व्यतिरेकेऽन्वयः। तथा च किञ्चिद्वृत्तिव्यतिरेकप्रतियोगित्वाभावो यद्धेतुनिरूपितसाध्यवृत्तिः स हेतुः केवलान्वयीति फलितार्थः। तेन न सिद्ध्यसिद्धिभ्यां व्याघातः। एतच्च ज्ञायमानलिङ्गस्यानुमितिकरणत्वमतेन। अतएव 'अन्वयव्यतिरेकिणि हेतौ' इत्यत्रहेतुपदमपि। स्वमते लिङ्गज्ञानादेरनुमितिकरणत्वादर्थान्तराण्यूहनीयानि। एवमग्रेऽपि। अत्र व्यतिरेकशब्दोऽत्यन्ताभाववचनः, तेनघटत्वाद्यनुयोगिकभेदप्रतियोगित्वस्याभिधेयत्वेऽपि नाव्याप्तिः। व्यतिरेके यत्किञ्चिद्वृत्तित्वनिवेशान्नगगणाभावसाध्यकेऽव्याप्तिः। प्रमेयत्वहेतोः केवलान्वयित्वमुपपादयति अभिधेयत्वस्येत्यादि। अभिधेयत्वन्तु शब्दशक्यत्वम्।

केवलव्यतिरेकिणं निर्वक्ति यत्र साध्यप्रसिद्धिरित्यादि। यद्धेतुनिरूपितसाध्यवत्त्वप्रकारकनिश्चयः पक्षातिरिक्तविशेष्यकः सन् यथार्थो न भवति स हेतुः केवलव्यतिरेकीत्यर्थः। केवलव्यतिरेकिण्यसम्भववारणाय पक्षातिरिक्त इति। केवलव्यतिरेकिणमभिनीय दर्शयति यथा पृथिवीत्यादि। पक्षान्तर्भावेण सहचारग्रहस्य व्याप्त्यग्राहकत्वादत्रान्वयव्याप्तिनिश्चायकान्वयसहचारग्रहासम्भाद्व्यतिरेकव्याप्तिग्राहकं विपक्षान्तर्भावेण व्यतिरेकसहचारग्रहमुपपादयति यत्रेतरभेदाभाव इत्यादि। व्यतिरेकव्याप्तिः स्वरूपमुपपिपादयिषुराह व्यतिरेकव्याप्ताविति। साध्याभावो व्याप्य इति। तथाच साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्यतिरेकव्याप्तिरित्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अन्वयथतिरेकिणं निरूपयति यत्र साध्यमित्यादि। केवलव्यतिरेकिण्यति व्याप्तिवारणाय साध्यमिति। केवलान्वयिन्यतिव्याप्तिवारणाय साध्याभाव इति। उभयत्रातिव्याप्तिवारणार्थमन्यत्रे ति। पक्षातिरिक्त इति तदर्थः। प्रसिद्ध इति। प्रसिद्धत्वं यथार्थधीविषयत्वम्। तथा च पक्षान्यविशेष्यकयथार्थनिश्चयप्रकारीभूताभाव-प्रतियोगिसाध्यनिरूपितहेतुत्वमन्वयव्यतिरेकिहेतुत्वमित्यर्थः। अन्वयव्यतिरेकिणम-भिनीय दर्शयति यथा पर्वत इत्यादि। प्राचां मते पञ्चरूपविशिष्टहेतोर्यद्गमकत्वं तदन्वयव्यतिरेकिहेतोरेवान्ययोः पञ्चरूपविरहादित्याशयेनाहान्वयव्यतिरेकिणोत्यादि। पञ्चरूपाणि दर्शयतिपक्षवृत्तित्वमित्यादि। विपक्षव्यावृत्तत्वं—विपक्षावृत्तित्वम्। केव-लान्वयिनि पञ्चरूपासत्त्वमादर्शयति केवलान्वयिनीत्यादि। विपक्षव्यावृत्तत्वरहितमिति। विपक्षत्वघटकसाध्याभावस्यैवासिद्धे रितिभावः। केवलव्यतिरेकिणि पञ्चरूपासत्त्वं प्रदर्शयति केवलव्यतिरेकिणीति। सपक्षसत्त्वरहितमिति। तत्रत्यपृथिवीत्वरूपहेतोः पक्षमात्रवृत्तित्वादिति।

पक्षवृत्तित्वमित्यत्र किं पक्षत्वमित्याकाङ्क्षायामाह यत्र साध्यसन्देह इति। साध्यसंशयविशेष्यताश्रयः पक्षपदार्थ हत्यर्थः। वस्तुतस्तु निर्णीते मननविधातात् साध्यसन्देहं विनापि घनगर्जितादिना मेघाद्यनुमानाच्च तादृशेन पक्षपदार्थः किन्तु स्वप्रतियोगिविशेष्यत्वसम्बन्धेन प्रोक्तपक्षताश्रयत्वमेव पक्षपदप्रवृत्तिनिमित्तं बोध्यम्। सपक्षत्वं निर्वक्ति यत्र साध्यनिश्चय इति। साध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यप्रकारकयथार्थनिर्णयविशेष्यत्वं सपक्षत्वमित्यर्थः। तेन कालिकादिसंसर्गको यः साध्यनिश्चयो यो वा साध्यतावच्छेदकसम्बन्धेन भ्रमात्मकः साध्यनिश्चयस्तन्नद्विशे-ष्योभूतह्रदादिनिरूपितवृत्तित्वविरहान्न धूमादिरूपान्ववयव्यतिरेकिणः सपक्षसत्त्वहानिः। विपक्षत्वं निरूपयति यत्र साध्याभावनिश्चय इति। साध्यतावच्छेदकसम्वन्धावच्छिन्न-प्रतियोगिताकसाध्याभावप्रकारकयथार्थनिश्चयविशेष्यत्वं विपक्षत्वमित्यर्थः। तेन सम-वायसम्वन्धावच्छिन्नवह्न्यभावप्रकारको यो निश्चयो यो वा संयोगावच्छिन्नद्रव्य-भावप्रकारको भ्रमात्मको निश्चयस्तत्तद्विशेष्योभूतमहानसादिवृत्तित्वाद्द धूमाद्यन्वय-व्यतिरेकिणो न विपक्षव्यावृत्तत्वहानिः। अत्र साध्याभाववत्त्वं साध्यतावच्छेदक-सम्बन्धेन साध्यवत्त्वबुद्धे विषयतयाप्रतिबन्धकतावच्छेदकसम्बन्धेन ग्राह्यम्। तेन संयो-गावच्छिन्नवह्न्यभावस्य कालिकादिना महानसादौ सत्त्वेऽपि नोक्तदोषतादवस्थ्यम्। अवाधितत्वघटकवाधं निरूपयति साध्याभाववान् पक्ष इति। साध्यवदन्यत्ववत्पक्षादि-रपि बोध्यः। असत्प्रतिपक्षितत्वघटकीभूतं सत्प्रति पक्षं निरूपयति साध्यविरोधीत्यादि। साध्यविरोधित्वेसति साध्यविरोध्युन्नायक इत्यर्थः। तथाच साध्याभावव्याप्यवान् साध्यवदन्यत्वव्याप्यवान् वा पक्षादिः सत्प्रतिपक्ष इतिभावः॥ ४६॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## ॥ तर्कामृतम् ॥

सोपाधौ पक्षसत्त्वाद्यन्यतमभङ्ग आवश्यकः। सोपाधिश्च स्वव्यभिचारितासम्बन्धेनोपाधिविशिष्टः। उपाधिश्च त्रिविधः साधनाव्यापकत्वे सति शुद्धसाध्यव्यापकः, साधनाव्यापकत्वेसति पक्षधर्म्मावच्छिन्नसाध्यव्यापकः, साधनाव्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकश्च। आद्यो यथा—'अयोगोलकं धूमवद्वह्नेः' इत्यत्रार्द्रेन्धनप्रभववह्निमत्त्वमुपाधिः साधनाव्यापत्वेसति शुद्धसाध्यव्यापकः। द्वितीयो यथा—'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यत्र वहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य साध्यस्य व्यापकमुद्भूतरूपवत्त्वमुपाधिः। तृतीयो यथा—'ध्वंसो विनाशी जन्यत्वात्' इत्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वमुपाधिः॥ ५०॥

## ॥ विवृतिः ॥

हेतोर्गमकतौपयिकानि पञ्चरूपाणि नान्वयव्यतिरेकिहेतुत्वावच्छेदेन वर्तन्ते किन्तु निरुपाधिकान्वयव्यतिरेकिहेतावेवेत्याशयेनाह सोपाधाविति। उपाधिविशिष्ट इत्यर्थः। उप—समीपस्थे (हेतौ) स्वधर्ममादधातीत्युपाधिरितिव्युत्पत्त्या व्यभिचारोन्नायकत्वमुपाधेर्द्रष्टव्यम्। साध्यसाधनभेदेनोपाधेर्भिन्नत्वादुपाधित्वस्य द्रव्याद्यनुगताश्रयकत्वासम्भवेन संयोगादेर्नियतसम्बन्धत्वानुपपत्त्यानुगतवैशिष्ट्यघटकसम्बन्धमाह 'स्वव्यभिचारितेति। स्वम्—उपाधिः। त्रिविध इति। तत्र साध्यव्यापकत्वे सति साधनाव्यापकत्वस्योपाधिसामान्यलक्षणत्वं विभागादेव व्यक्तम्। अतः सामान्यलक्षणमनभिधाय विभागोऽसङ्गत इति निरस्तम्। साधनाव्यापकत्वे सतीति। अव्यापकत्वस्य व्यापकत्वघटकत्वादादावव्यापकत्वाभिधानम्। शब्दोऽनित्यः कार्य्यत्वादित्यादौ सावयवत्वादावतिव्याप्तिवारणाय विशेष्यदलम्। एवं तत्रैव प्रमेयत्वादावतिप्रसङ्गवारणाय सत्यन्तम्। शुद्धसाध्यव्यापक इति। पक्षधर्म्माद्यनवच्छिन्नसाध्यव्यापक इत्यर्थः। अत्र साध्यव्यापकत्वं येन रूपेण येन सम्बन्धेन च ग्राह्यं तेनैव रूपेण सम्बन्धेन च साधनाव्यापकत्वमपि बोध्यम्। अन्यथा वह्निमान् धूमादित्यादौ वह्नित्वेन साध्यव्यापके तत्तद्वह्नित्वेन च साधनाव्यापके तत्तद्वह्नौ, संयोगेन साध्यव्यापके समवायेन च साधनाव्यापके आलोकादौ चातिव्याप्तिः प्रसज्येत। पक्षधर्म्मावच्छिन्नेति। अत्रावच्छिन्नत्वं सामानाधिकरण्यसम्बन्धेन ग्राह्यम्। एवं साधनावच्छिन्नत्वमपि तृतीये। विधात्रयं क्रमेणाभिनीय दर्शयत्याद्यो यथेत्यादि। वह्निमत्त्वमात्रस्य साधनाव्यापकत्वविरहादुक्तमार्द्रेन्धनप्रभवेति। प्रत्यक्षस्पर्शाश्रयत्वादिति। अनुद्भूतस्पर्शाश्रयत्वगिन्द्रियान्तर्भावेण व्यभिचारवारणाय प्रत्यक्षेति। वहिर्द्रव्यत्वावच्छिन्नस्येति। अत्र बहिर्द्रव्यत्वं पक्षधर्म्मः, तच्च न बहि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रिन्द्रियजन्यप्रत्यक्षविषयद्रव्यत्वरूपं तस्य पक्षधर्म्मत्वानुपपत्तेः किन्तु गगणाद्यन्यद्रव्यत्वम्, द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्यात्मादावपि सत्त्वादुपाधेः साध्याव्यापकतापत्तेराह वह्नि्नरिति। अत्र केवलसाध्यव्यापकत्वं न सम्भवति प्रत्यक्षविषयत्वस्य रूपाभाववत्यात्मादौ सत्त्वादिति भावः। उद्भूतरूपवत्त्वमिति। न च तथाविधसाध्यव्यापकत्वस्य रूपत्वावच्छिन्नेऽपिसत्त्वादुद्भूतपदं व्यर्थमिति वाच्यं प्रत्यक्षत्वेनोद्भूतरूपवत्त्वेन कार्यकारणभावलक्षणानुकूलतर्कप्रदर्शनार्थत्वेन तत्सार्थक्यात्। जन्यत्वादिति। अत्र जन्यत्वं ध्वंसप्रतियोगित्वं तेन तस्य पक्षधर्म्मत्वाभावात् नोपाधित्रैविध्यहानिः। भावत्वमुपाधिरिति। अत्र केवलसाध्यव्यापकत्वं न सम्भवति विनाशित्वस्य भावत्वाभाववति प्रागभावे सत्त्वादिति भावः। केचित्तु ध्वंसो विनाशी प्रमेयत्वादित्यत्रोक्तत्रिविधोपाधेरसम्भवाच्चतुर्थमुदासीनधर्मावच्छिन्नसाध्यव्यापकं जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वमुपाधिरिति वदन्ति। वस्तुतस्तु यद्धर्म्मावच्छिन्नसाध्यव्यापकत्वे सति तद्धर्मावच्छिन्नसाधनाव्यापकत्वमुपाधित्वमित्युक्तौ न कश्चिद्दोष उक्तस्थलेषु वह्निर्द्रव्यत्वादेर्यद्धर्मत्वेनोपादातुं शक्यत्वात्। उपाधेर्दूषकत्वन्तु स्वव्यभिचारेण हेतोः साध्यव्यभिचारोन्नायकतया बोध्यम्। तदुक्तं 'व्यभिचारोन्नयं कुर्वन्नुपाधिर्याति दोषताम्। एतद् वह्नि्नसर्व्वेषामुपाधीनां परायणम्' इति। यद्यप्ययं संयोगसंयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादित्यादौ निर्गुणत्वादिरूपोपाधेस्तावन्मात्रेण दूषकत्वं नोपपद्यते संयोगात्मकसाध्याभाववद्वृत्तित्वस्य हेताविष्टत्वात् तथापि तत्र स्वव्याप्यत्वेन हेतुना साध्यस्य पक्षावृत्तित्वोन्नायकतयोपाधेर्दूषकत्वं बोध्यं संयोगसामान्याभावे इदन्त्वावच्छिन्नावृत्तिज्ञाने सति इदन्त्वावच्छिन्नोद्देश्यकसंयोगसामान्याभावविधेयकानुमितेः प्रतिरोधादसमानप्रकारकज्ञानयोरपि प्रतिबध्यप्रतिबन्धकभावस्य सिद्धत्वात्॥ ५०॥

## ॥ तर्कामृतम् ॥

अथ हेत्वाभासाः कथ्यन्ते। सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्चहेत्वाभासाः। सव्यभिचारस्त्रिविधः साधारणासाधारणानुपसंहारिभेदात्। साध्याभाववद्वृत्तित्वं साधारणत्वं, यथा धूमवान्वह्नेः। सकलसपक्षव्यावृत्तत्वमसाधारणत्वम्, यथा पर्वतो वह्निमान् पर्वतत्वात्। सर्वपक्षकत्वमनुपसंहारित्वं, यथा सर्वप्रमेयमभिधेयत्वात्। साध्याभावव्याप्तोहेतुर्विरुद्धः, यथा घटो नित्यः सावयवत्वात्। सत्प्रतिपक्षो यथा पर्वतो वह्निमान् धूमात्, पर्वतो वह्नयभाववान्महानसान्यत्वात्। असिद्धस्त्रिविधः—आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्च। यत्र पक्षोऽसन्सिद्धसाधनं वा स आश्रयासिद्धः, यथा शशविषाणं नित्यमजन्यत्वात्, शरीरं हस्तादिमत्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हस्तादिमत्तयाप्रतीयमानत्वात्। यत्र पक्षावृत्तिर्हेतुः स स्वरूपासिद्धः, यथा पर्वतो वह्निमान् महानसत्वात्। स च विशेषणासिद्धविशेष्यासिद्धभागासिद्धभेदाद्बहुविधः, आद्यो यथा शब्दोऽनित्यश्चाक्षुपत्वे सति जन्यत्वात्। द्वितीयो यथा शब्दोऽनित्यो गुणत्वेसति परमाणुवृत्तित्वात्। तृतीयो यथा एतानि द्रव्याणि निरवयवत्वात्। सोपाधिर्व्याप्यत्वासिद्धः, यथा धूमवान्वह्नेः। वाधो यथा ह्रदो वह्निमान् द्रव्यत्वात्। तेन एत द्दोषत्रयरहितो हेतुः सद्धेतुः ॥ ५१ ॥

॥ * ॥ इत्यनुमानं व्याख्यातम् ॥ * ॥

॥ विवृतिः ॥

सद्धेतुं निरूप्य विरोधादिसम्बन्धेन स्मृतमसद्धेतुं निरूपयितुं प्रतिजानीतेऽथेति। व्याप्तिपक्षधर्म्मता विशिष्टहेतुनिरूपणानन्तरमित्यर्थः। हेत्वाभासा इति। हेतुवदाभासन्त इति व्युत्पत्त्या दुष्टहेतव इत्यर्थः। विभजते सव्यभिचारेत्यादि। पञ्चेति। यद्यपि विरुद्धादिहेतोर्व्यभिचारित्वादिनियमाद्दुदुष्टानां पञ्चत्वानुपपन्न्या पञ्चधा विभागोऽनुपपन्नस्तथापि दोषाणां सव्यभिचारत्वादितत्तद्धर्म्मेण पञ्चविधत्वाद्दुष्टानां पञ्चविधत्वाभिधानमिति ध्येयम्। दोषसामान्यलक्षणन्तु यादृशविशिष्टविषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वमित्यादिकमप्याादावनुसन्धेयम्। दुष्टत्वञ्च सम्बन्धविशेषेण दोषवत्त्वम्, तेन ह्रदो वह्निमान् धूमादित्यादौ वह्नयभाववद्ह्रदाद्यात्मकदोषवत्त्वस्य धूमादावसत्त्वेऽपि न क्षतिरितिसंक्षेपः। तत्राद्यं विभजते सव्यभिचारस्त्रिविध इति। सव्यभिचारत्वन्तु विशिष्टसाध्यसाधनग्रहविरोधितानवच्छेदकत्वे सति विषयविधया व्याप्तिग्रहविरोधितावच्छेदकत्वम्।

सव्यभिचारेषु साधारणं लक्षयति साध्याभाववद्वृत्तित्वमिति। साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रतियोगिताकभाववन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वमित्यर्थः। तेन वह्निमान् धूमादित्यादौ तत्तद्द्रव्यभाववति समवायसम्बन्धावच्छिन्नद्रव्यभाववति च संयोगेन संयोगावच्छिन्नवह्नयभाववति वा कालिकेन धूमादेर्वृत्तित्वेऽपि नातिव्याप्तिः। एतस्य च साध्याभाववदवृत्तित्वरूपान्वयव्याप्तिग्रहविरोधितावच्छेदकतया दोषत्वं बोध्यम्। साधारणमुदाहरति यथा धूमवानित्यादि। अयञ्च नित्यदोषः।

असाधारणं लक्षयति सकलसपक्षेति। सपक्षत्वावच्छेदेन वर्त्तमाना या व्यावृत्तिस्तत्प्रतियोगित्वं साध्यव्यापकीभूताभावप्रतियोगित्वमितियावत्। सपक्षत्वमत्र साध्यवत्त्वरूपमेव विवक्षितं नतु निश्चयगर्भं निश्चयांशस्य प्रतिबन्धकेनायमनुपयोगात्। अस्य च साध्यवत्त्वग्रहविरोधिसाध्याभावग्रहोन्नायकतया दोषत्वमिति मणिकृतामाशयः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

असाधारणस्थलमभिनयति यथा पर्व्वत इत्यादि। पक्षे साध्यानिश्चयदशायामत्रासाधारण्यमिति बोध्यम्। अयञ्चानित्यदोषः।

उपसंहारः—अन्वयव्यतिरेकसहचारयोरन्यतरो यस्य नास्ति स हेतुरनुपसंहारीत्याशयेन प्राचां मतमनुसृत्यानुपसंहारिणं लक्षयति सर्व्वपक्षकत्वमिति सर्व्वस्यैव पक्षत्वादन्वयव्यतिरेकसहचारग्रहासम्भवाद्व्याप्तिग्रहानुत्पादादस्य दूषकत्वमितिभावः। तन्मते किञ्चिद्विशेष्यकनिश्चयाविषयसाध्यकत्वे सति किञ्चिद्विशेष्यकनिश्चयाविषयसाध्याभावकत्वमनुपसंहारिलक्षणम्। नव्यानां मते त्वत्यन्ताभावाप्रतियोगिसाध्यकत्वादिकमनुपसंहारित्वम्, तस्य च व्यतिरेकव्याप्तिग्रहविरोधित्वं दूषकताबीजम्। अयमप्यनित्यो दोषः। अनुपसंहारिस्थलमभिनयति यथा सर्व्वमित्यादि।

अथ विरुद्धं लक्षयति साध्याभावव्याप्त इति। अत्र व्यतिरेकव्याप्ति र्ग्राह्या। तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं विरोधः। तस्य च साध्याभावग्रहोन्नायकतया साक्षादनुमितिप्रतिवन्धकत्वम्। विरुद्धस्थलमभिनीय दर्शयति यथा घटो नित्य इति। असङ्कीर्णविरोधस्तु न सम्भवत्येव व्यभिचारस्य वाधस्य सरूपासिद्धेर्व्वाऽवश्यम्भावात्। अयञ्च नित्यदोषः।

'साध्यविरोधिसाधको हेतुः' इत्यादिना लक्षणस्योक्तत्वात्, सन्—विद्यमानः, प्रतिपक्षः—विरोधिपरामर्शः, यस्येति व्युत्पत्त्या समवलविरोधिपरामर्शकालीनपरामर्शविषयःसत्प्रतिपक्ष इति सूचनाद्वात्र साक्षात्सत्प्रतिपक्षलक्षणानभिधानमिति बोध्यम्। तादशपरामर्शविषयश्च साध्याभावव्याप्यवत्पक्षादिः। परामर्शश्च साध्याभावव्यतिरेकव्याप्त्यनवगाहो ग्राह्यः। तेन नासाधारण्यविरोधसङ्करः। सत्प्रतिपक्षमुदाहरति यथा पर्व्वतो वह्निमान् धूमादित्यादि। अत्र वह्न्यभावव्याप्यवत्तापरामर्शेण वह्न्यनुमितेर्व्वह्निव्याप्यवत्तापरामर्शेण च वह्न्यभावानुमितेः प्रतिरोध इति भावः। अयञ्चानित्यदोषः।

असिद्धं विभजतेऽसिद्धस्त्रिविध इति। आश्रयासिद्ध इत्यादि। तथाचैतत्त्रितयान्यतमत्वमसिद्धसामान्यलक्षणमित्यर्थः। असिद्धेष्वाश्रयासिद्धं निरूपयति यत्र पक्षोऽसन्निति। यद्धेतुनिरूपितः पक्षः पक्षतावच्छेदकाभाववान् स हेतुराश्रयासिद्धइत्यर्थः। तथा च पक्षतावच्छेदकाभाववत्पक्ष आश्रयासिद्धिरितिभावः। अवच्छेदावच्छेदेनानुमितावच्छेदावच्छेदेन सिद्धेः सामानाधिकरण्येनानुमितौ च सामानाधिकरण्येनावच्छेदावच्छेदेन चोभयथासिद्धेः प्रतिवन्धकत्वात्तद्विषयीभूतसाध्यवत्पक्षस्यापि हेत्वाभासत्वमावश्यकं, तस्य चान्यहेत्वाभासेऽप्रवेशात् साध्यसंशयरूपपक्षताविघटकतयाश्रयासिद्धावन्तर्भावो युक्त इतिप्राचां मतानुसारेणाह सिद्धसाधनं वेति। पक्षतावच्छेदकरूपेण पक्षे साध्यनिर्णय इत्यर्थः। तथास्तु यादृशविशिष्ट-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विषयकत्वेनेत्यत्र तृतीयाया अनतिरिक्तरूपावच्छेदकत्वार्थकत्वात् सिषाधयिषाविशिष्ट-सिद्धेश्चानुमित्यप्रतिबन्धकत्वात् साध्यवत्पक्षस्य न हेत्वाभासत्वं युक्तं किन्तु वादिनिग्रहप्रयोजकतया निग्रहस्थानत्वमेवोचितमितिप्राहुः। तत्रासत्पक्षकाश्रयासिद्ध-मुदाहरति शशविषाणमिति। तत्र प्रतिबन्धकं ज्ञानविषयशशीयत्वाभाववद्विषाणमा-श्रयासिद्धिरितिभावः। सिद्धसाधनरूपाश्रयासिद्धमभिनीय दर्शयति शरीरमिति। हस्तादिमत्त्वस्य साध्यत्वे हस्तादिमत्त्वादिति हेतुप्रयोगस्य सम्प्रदायविरुद्धत्वादाह हस्तादिमत्तयेत्यादि। अत्र परामर्शदशायां सिद्धिसत्त्वादनुमित्या सिद्धस्य साधनात् सिद्धसाधनमिति भावः।

स्वरूपासिद्धं निरूपयति यत्र पक्षावृत्तिर्हेतुरिति। तथाच हेत्वभाववत्पक्षादिः स्वरूपासिद्धिरितिभावः। एतस्यच व्याप्यवत्ताग्रहविरोधित्वात्परामर्शविघटनद्वारा दूषकत्वम्। सामान्यतः स्वरूपासिद्धमुदाहरति यथा पर्व्वत इति। नित्यदोषोऽयं त्रिविधोऽसिद्धः।

स्वरूपासिद्धं विभजते स चेति। स्वरूपासिद्धश्चेति। विशेषणासिद्धेति। यत्र पक्षनिष्ठहेत्वभावाधिकरणत्वं हेतुघटकविशेषणाभावाधिकरणत्वप्रयुक्तं भवति तत्र विशेषणासिद्धिरित्यर्थः। तथाच विशिष्टसाधनाभावप्रयोजकविशेषणाभाव-वत्पक्षादिर्व्विशेषणासिद्धिरितिभावः। विशेष्यासिद्धेति। यत्र पक्षेहेत्वभाववत्त्वं विशिष्टसाधनघटकविशेष्याभाववत्त्वप्रयुक्तं तत्र विशेष्यासिद्धिः। तथाच विशिष्ट-साधनाभावप्रयोजकविशेष्याभाववत्पक्षादिः विशेष्यासिद्धिरितिभावः। भागा-सिद्धेति। यत्र पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावस्तत्र भागासिद्धिः। तथाच व्यापकत्वानवच्छिन्नसंसर्गकहेत्वभाववत्पक्षादिर्भागासिद्धिरितिभावः। क्रमेण त्रिविधासिद्धोदाहरणानि दर्शयति आद्यो यथेत्यादि। जन्यत्वस्यानित्यत्वसाधने सद्धेतुत्वाच्चाक्षुषत्वे सतीति। चाक्षुषत्वमात्रस्य हेतुत्वे विशेषणासिद्ध्यनुपपत्तेराह जन्यत्वादिति। अत्र पक्षे विशिष्टसाधनाभावे चाक्षुषत्वरूपविशेषणाभावः प्रयोजकः। शब्दत्वावच्छेदेनैव परमाणुवृत्तित्वाभावस्य सत्त्वादर्थान्तरं वारयितुमाह तुणत्वे सतीति। गुणत्वाभावस्य शब्देऽसत्त्वादाह परमाणुवृत्तित्वादिति। अत्र शब्दे विशिष्टसाधनाभावे परमाणुवृत्तित्वरूपविशेष्याभावः प्रयोजकः। वस्तुतस्तत्र विशेष्यासिद्धिर्व्यभिचारादिसङ्कीर्णा जलीयपरमाणुरूपादेरपि हेत्वधिकरणत्वात्तत्र च साध्याभावस्य सत्त्वादतः शब्दोऽनित्यो जन्यत्वे सति चाक्षुषत्वादित्यादिकमसङ्कीर्ण-विशेष्यासिद्ध्युदाहरणं मन्तव्यम्। एतानि द्रव्याणीति। एतत्त्वस्य नित्यद्रव्य इवा-नित्यघटादावपि सत्त्वात् पक्षतावच्छेदकावच्छेदेन हेत्वभावविरहाद्भागासिद्धिरित्यर्थः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वस्तुतस्तु निरवयवत्वस्य गुणादौ द्रव्यत्वव्यभिचारित्वात् पर्व्वतादीनि द्रव्याणि वह्निधूमोभयवत्त्वादित्यादिकमसङ्कीर्णभागासिद्धयुदाहरणं बोध्यम् ।

व्याप्यत्वासिद्धं निरूपयति सोपाधिरिति । इदमुपलक्षणं व्यर्थ्यविशेषणकसाधनतावच्छेदिकायाः साध्यासिद्धेः साधनासिद्धेश्च व्याप्यत्वासिद्धावेवान्तर्भावो बोध्योऽन्यथा पञ्चधाविभागानुपपत्तिरितिध्येयम् । अत्र सोपाधित्वं स्वव्यभिचारित्वसम्बन्धेनोपाधिविशिष्टत्वम् । अयञ्च व्यभिचारज्ञानद्वारा व्याप्तिज्ञानविरोधित्वाद्दूषकः । व्याप्यत्वासिद्धमुदाहरति यथा धूमवानिति । न चैवं साधारणसङ्कराद्विभागानुपपत्तिरिति वाच्यमुपधेयसङ्करेऽप्युपाध्यसङ्करात् । वस्तुतस्तु आश्रयासिद्धयादिभिन्नत्वे सति असिद्धिर्व्याप्यत्वासिद्धिः । यत्राश्रासिद्धयाद्यप्रसिद्धिस्तत्र भिन्नान्तमनुपादेयमेव लक्ष्यभेदेन लक्षणभेदस्यादोषत्वात् । तत्रासिद्धित्वंनाम साधारण्यादिभिन्नत्वे सति विषयविधया परामर्शविरोधितावच्छेदकत्वम् ।

अन्तिमं बाधितं निरूपयितुमाह बाधितो यथेति । बाधस्तु साध्याभाववत्पक्षादिः । अस्य च साक्षादनुमितिप्रतिबन्धकत्वाद्दूषकत्वम् । अत्रच सामानाधिकरण्येण विशिष्टबुद्धाववच्छेदावच्छेदेन बाधनिश्चयस्थावच्छेदावच्छेदेन विशिष्टबुद्धौ च सामानाधिकरण्येणावच्छेदावच्छेदेन चोभयथाबाधनिश्चयस्य विरोधित्वं बोध्यम् । अयञ्चनित्यदोषः । उदाहरति ह्रद इत्यादि । असङ्कीर्णबाधोदाहरणन्तु शिखरावच्छिन्नः पर्व्वतो वह्निमान् धूमादित्यादिकं बोध्यमिति संक्षेपः । न तावन्मुख्यप्रयोजनतया दुष्टहेतुनिरूपणं कृतं किन्तु सद्धेतुनिरूपणोपयोगितयैवेति प्रतिपादयितुमाह तेनत्यादि । तेन— उक्तहेतूनां दुष्टत्वेन, एतद्दोषरहित इति । अत्र समुदायाभावोन विवक्षितः, तेनैकमात्रदोषेणापिदुष्टत्वमुपपद्यत इतिज्ञापनार्थमेतत्पदमिति ध्येयम् ॥ ५१ ॥

॥ * ॥ इत्युपमाननिरूपणविवृतिः ॥ * ॥

॥ तर्कामृतम् ॥

उपमितिकरणमुपमानम् । कीदृशो गवय इतिप्रश्ने 'गोसदृशो गवयः' इत्युत्तरिते यदा गोसदृशं प्राणिनं पश्यति तदा पूर्व्वोक्तं वाक्यार्थं स्मरति, अनन्तरं 'अयं गवयपदवाच्यः' इति शक्तिग्रहः, सेयमुपमितिः ॥ ४२ ॥

॥ * ॥ इत्युपमानं व्याख्यातम् ॥ * ॥

॥ विवृतिः ॥

अथावसरसङ्गत्योपमानं निरूपयत्युपमितिकरणमिति । उपमितित्वावच्छिन्नकार्य्यतानिरूपितकरणतावदित्यर्थः । तेन विशिष्टबुद्धित्वावच्छिन्नकार्य्यताया उपमितौ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सत्त्वेऽपि नातिव्याप्तिः। उपमानलक्षणस्योपमितिघटितत्वादुपमितिं निरूपयितु भूमिकामारचयति कीदृश इत्यादि। अत्र यत्करणं तदभिधातुमाह गोसदृशं प्राणिनं पश्यतीति। तथाच यदेतद्गोसादृश्यदर्शनं तदुपमानमित्यर्थः। व्यापारवत एव कारणस्य करणत्वनियमादत्र यो व्यापारस्तं प्रदर्शयितुमाह पूर्व्वोक्तवाक्यार्थं स्मरतीति। तथाच गोसदृशो गवय इत्यस्य वाक्यस्यार्थस्मरणं व्यापार इतिभावः। उपमितिं निर्द्दिशति अयं गवयपदवाच्य इति। इदम्पदेन गोसदृशपिण्डनिर्द्देशः। इदन्त्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारको यो निर्णयः स उपमितिरितिभावः। उपमितित्वञ्चोपमिनोमीत्यनुव्यवसायसाक्षिकजातिविशेषः। सिद्धान्तमुक्तावलीकृतस्तु 'गवयो गवयपदवाच्यः' इत्याकारकनिर्णयस्यैवोपमितित्वं नतु 'अयं गवयपदवाच्यः' इत्याकारकनिर्णयस्य, गवयान्तरे शक्तिग्रहाभावप्रसङ्गादित्याहुः। करभे पश्वन्तरवैधर्म्यश्रवणानन्तरं तथाविधविधर्म्मपिण्डदर्शने सति वैधर्म्म्यातिदेशवाक्यार्थस्मरणादयं करभपदवाच्य इत्याकारकवैधर्म्योपमितिमपि मन्यन्ते न्यायवार्त्तिकतात्पर्य्यकारादयः॥ ५२॥

॥*॥ इत्युपमाननिरूपणविवृतिः ॥*॥

## ॥ तर्कामृतम् ॥

आप्तोक्तः शब्दः प्रमाणम्। प्रकृतवाक्यार्थगोचरयथार्थज्ञानवानाप्तः। पदज्ञानं करणम्। पदार्थोपस्थितिर्व्यापारः। आकाङ्क्षायोग्यतासत्तितात्पर्य्यज्ञानानि सहकारीणि। फलं शाब्दबोधः॥ ५३॥

## ॥ विवृतिः ॥

अथोपजीव्योपजीवकभावसङ्गत्या शब्दं निरूपयत्याप्तोक्त इति। तथाच शब्दत्वजातेर्भ्रान्तोच्चरितशब्दे सत्त्वेऽपि न व्यभिचारः। एवञ्चाप्तोच्चरितत्वं लक्षणं 'शब्दः प्रमाणम्' इति च लक्ष्यनिर्द्देश इति बोध्यम्। एतच्च स्वरूपसत्पदकरणत्वमतेन, पदज्ञानस्य करणत्वमते तु .आप्तेनोच्यते यत्पदं तद्विषयकज्ञानस्य शब्दप्रमाणत्वमिति ज्ञेयम्। अतएव 'पदज्ञानं करणम्' इत्युत्तरग्रन्थाविरोधः। भ्रमप्रमादादिदोषग्रस्तस्याप्तत्वं न सम्भवतीत्याशयेनाह प्रकृतेत्यादि। अप्रकृतवाक्यार्थयथार्थज्ञानवत्त्वस्य प्रकृतवाक्यार्थायथार्थज्ञानवत्त्वस्य च भ्रान्तादेरपि सत्त्वादतिप्रसङ्गवारणाय प्रकृतेति यथार्थेति च। तथाच पटकर्म्मताकानयनानुकूलकृतिगोचरयथार्थज्ञानवदुच्चरितः पटमानयेत्यादिशब्दः प्रमाणमितिभावः। अथ करणव्यापारादिकं स्वयं कण्ठतोऽभिधत्ते पदज्ञानमित्यादि। पदार्थोपस्थितिरिति। पदजन्यार्थोपस्थिति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रित्यर्थः। तेन पदज्ञानसत्त्वे यथाकथञ्चिदर्थस्मरणेऽपि न शाब्दबोधः। आकाङ्क्षेत्यादि। अत्र द्वन्द्वसमासान्ते श्रूयमाणज्ञानशब्दस्य प्रत्येकमन्वयादाकाङ्क्षादिज्ञानानां सहकारिकारणत्वं बोध्यम्। अन्यथाकाङ्क्षादिभ्रमाच्छाब्दभ्रमानुपपत्तेः। प्राञ्चस्त्वासत्तेः स्वरूपसत्तया एवान्वयबोधहेतुत्वं नतु तज्ज्ञानस्य गौरवादित्याहुः। तन्न। 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादावन्यादिपदेन सार्द्धं गिर्य्यादिपदस्याव्यवधानभ्रमाच्छाब्दबोधोदयेन स्वरूपसदासत्तेः कारणत्वे व्यभिचारादिति नव्याः। येतु सामान्यतो विशिष्टबुद्धिं प्रति बाधनिश्चयस्य प्रतिबन्धकत्वादेव वह्निना सिञ्चतीत्यादौ सेककरणत्वाभाववद्वह्निरित्ययोग्यतानिश्चयेन प्रतिबन्धादन्वयबोधविरहोपपत्ते र्योग्यताज्ञानस्य न शाब्दबोधेहेतुत्वं किन्तु स्वरूपसत्या योग्यताया एवेति मन्यन्ते, तेषान्तु यद्विषयकमनुमित्यादिकं कदापि न जातं जातस्तु तद्विषयकः शाब्दबोध एवेति तत्र तद्विशिष्टबुद्धावयोग्यतानिश्चयत्वेन प्रतिबन्धकत्वस्य तदवच्छिन्नाभावत्वेन कारणत्वस्य च कल्पनं न सम्भवतीति तादृशान्वयबोधे तदीययोग्यताज्ञानस्यैव कारणताया अभ्युपेतव्यत्वाद् यद्विशेषेइत्यादिन्यायेन शाब्दत्वावच्छिन्नं प्रति योग्यताज्ञानत्वेन कारणत्वकल्पनमावश्यकमिति बोध्यम् ॥ ५३ ॥

॥ तर्कामृतम् ॥

स्वरूपयोग्यत्वे सत्यजनितान्वयबोधकत्वमाकाङ्क्षा। तेन 'घटः, कर्म्मत्वं आनयनं कृतिः' इत्यत्र नान्वयबोधः स्वरूपायोग्यात्वात्। 'अयमेतिपुत्रो राज्ञः पुरुषोऽपसार्य्यताम्' इत्यत्र राज्ञः पुरुष इति नान्वयबोधः पुत्रेण जनितान्वयबोधकत्वात्। बाधकप्रमाविरहो योग्यता। तेन 'वह्निना सिञ्चति' इत्यत्रनान्वयबोधोऽयोग्यत्वात्। अव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्तिः। न तेन 'गिरि र्भुक्तं वह्निमान् देवदत्तेन' इत्यत्र नान्वयबोधः। तत्तदर्थप्रतीतोच्छयोच्चरितत्वं तात्पर्य्यम्। तेन भोजनप्रकरणादौ 'सैन्धवमानय' इत्युक्तेऽश्वान्वयबोधो न भवति ॥ ५४ ॥

॥ विवृतिः ॥

तत्राकाङ्क्षां निरूपयति स्वरूपयोग्यत्वे सतीति। स्वरूपयोग्यत्वन्तु शाब्दबोधजनकतावच्छेदकविषयतानिरूपकतावच्छेदकानुपूर्व्वीमत्त्वम्। आनुपूर्व्वी चाव्यवहितोत्तरत्वेनाव्यवहितपूर्व्वत्वेन वा संसर्गेण तत्पदविशिष्टतत्पदत्वरूपा। तत्र सत्यन्तदलस्य व्यावृत्तिं दर्शयति तेनेत्यादि। घटकर्म्मताकानयनानुकूलकृतिगोचरान्वयबोधजनकतावच्छेदिका या घटमानयेतिवाक्यनिष्ठव्यवहितोत्तरत्वसम्बन्धेन घटादिपदविशिष्टाम्पदत्वादिरूपानुपूर्व्वी तस्या अभावाद् घटः कर्म्मत्वमित्यादिपदैर्नतादृशान्वयबोध इति भावः। तत्र विशेष्यदलव्यावृत्तिमाहायमेतीत्यादि। तदनुपादानेऽयमेतीत्यादिवाक्येऽ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न्वयबोधजनकतावच्छेदकघ्यन्तराजपदविशिष्टपुरुषपदत्वरूपानुपूर्व्वीसत्त्वाद्राजसम्बन्धि-पुरुषविषयकान्वयबोधः स्यादितिभावः। तदुपादानेतु 'राज्ञः' इति पदेन 'पुत्रः' इति पदेन साद्धं मन्वयं लभमानेन राजसम्बन्धिपुत्रविषयकान्वयबोधस्य जनितत्वादजनितान्वयबोधकत्वाभावान्न तादृशान्वयबोध इतिभावः। न चैवमवान्तरवाक्यार्थबोधोत्तरं-महावाक्यार्थबोधो न स्यादजनितान्वयबोधकत्वाभावादितिवाच्यं तद्विशेष्यकतत्प्रकार-कान्वययोधं प्रति तत्समानाकारान्वयबोधाभावस्य कारणताया विवक्षितत्वात्। अत्रेदं चिन्त्यते—अयमेतीत्यदावजनितान्वयबोधदशायां राजपदस्य पुरुषपदेन साद्धंमप्या-काङ्क्षायाः सत्त्वाद्राज्ञःपुरुष इत्यन्वयबोधापत्तेर्व्वारणाय तात्पर्य्यज्ञानस्योपयोगः कल्पनीयः किञ्च राज्ञःपुत्र इतिजनितान्वयबोधदशायामपि राजपदस्य पुरुषपदेन साद्धं तात्पपर्य्यविरहादेवान्वयबोधो मास्तु किमजनितात्वयबोधकत्वप्रवेशेन।

तत्र योग्यतां निरूपयति बाधकप्रमाविरह इति। पयसा सिञ्चतीत्यादौ प्रमात्मकशक्तिज्ञानादेः सत्त्वाद्व्यभिचारवारणाय बाधकेति। तत्रैव भ्रमात्मकनिश्चयस्य सम्भवाद्व्यभिचारवारणाय प्रमेति। तथाच तद्विशेष्यकतत्प्रकारान्वत्वयबोधं प्रति तद्विशेष्यकतदभावनिश्चयाभावः कारणमित्यर्थः। वह्निना सिञ्चतीत्यत्र सेकविशेष्यक-बह्निकरणकत्वाभावप्रकारकप्रमात्मकबाधकनिश्चयसत्त्वान्न शाब्दबोध इति भावः।

तत्रासत्तिं निरूपयति अव्यवधानेनेत्यादि। गिरिर्भुक्तमित्यादावन्वयप्रतियोगिनो गिरिवह्निमत्पदार्थयोर्भुक्तदेवदत्तपदार्थयोश्चोपस्थितिसत्त्वादासत्तिः स्यादत उक्तमव्य-वधानेनेति। अन्तराऽनन्वयिपदार्थोपस्थितिं विनेत्यर्थः। तथाचाव्यवहितत्वसंसर्गे-णान्वयस्य तत्प्रतियोग्युपस्थितिविशिष्टापरप्रतियोग्युपस्थितिरासत्तिरितिभावः। गिरि-र्भुक्तमित्यादौ गिरिर्व्वह्निमान्भुक्तं देवदत्तेनेति नान्वयबोधो गिरिवह्निमत्पदार्थो-पस्थित्योर्म्मध्येऽनन्वयिभुक्तपदार्थोपस्थितेर्भुक्तदेवदत्तपदार्थोपस्थित्योर्म्मध्येऽनन्वयिवह्नि-मत्पदार्थोपस्थितेश्च सत्त्वादव्यवधानेन तादृशपदार्थोपस्थितिविरहात्। अत्र तादृशोपस्थित्योः पदजन्यत्वं विवक्षणीयम्। तेन यत्र द्वारपदात्तदर्थोपस्थितेरनन्तरं मानान्तरेणपिधानोपस्थितिस्तत्रान्वयप्रतियोगिनोरव्यवधानेनीपस्थितिसत्त्वेऽपि नान्वय-बोधः। नन्वेवं 'दृष्ट्वातु पाण्डवानीकं व्यूढं दुर्य्योधनस्तदा। आचार्य्यमुपसङ्गम्य राजा वचनमब्रवीत्'॥ इत्यादौ दुर्य्योधनराजादिपदयोरासत्त्यभावच्छाब्दबोधो न स्यादिति चेन्न तत्रानायत्या योजितवाक्यादेवान्वयबोधोपगमादितिध्येयम्। गिरि-र्भुक्तमित्यादावाकाङ्क्षाविरहादेव शब्दानुत्पादोपपत्तेः सम्भवेऽपि स्वतन्त्रान्वयव्य-तिरेकाभ्यामासन्निधियः कारणत्वमिति नव्याः। एवमयोग्यस्थले आकाङ्क्षाया निराकाङ्क्षास्थले च योग्यताया अभावात् आकाङ्क्षायोग्यतयोः शब्दहेतुत्वस्य खण्डनं न सम्भवति स्वतन्त्रान्वयव्यतिरकाभ्यां तयोः कारणतायाः सिद्धत्वादिति बोध्यम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तात्पर्य्यं निरूपयति तत्तदर्थेत्यादि। लाघवादत्र तत्तदर्थान्वयबोधे तत्तदर्थ-प्रतीतीच्छाया एव तात्पर्य्यत्वमुपेयम्। तेन शुकवाक्यादेस्तादृशोच्चरितत्वविरहेऽपि न क्षतिस्तत्र तथाविधेश्वरेच्छायाः सत्त्वात्। यत्र तु शुकेन विसम्वादि मन्यते तत्र शिक्षयितुरिच्छैव तात्पर्य्यम्। ये तु तात्पर्य्यानुमापकप्रकरणज्ञानकारणत्वेन तात्पर्य्य-ज्ञानस्यान्यथासिद्धत्वं वदन्ति तेषां प्रकरणत्वस्याननुगतत्वात्कार्य्यकारणभावाननु-गमो दुष्परिहरणीयः। इत्थञ्च शाव्दत्वावच्छिन्नं प्रति तात्पर्य्यनिश्चयत्वेन हेतुत्वाद्वे-दार्थप्रतीतेरपीश्वरीयतात्पर्य्यज्ञानाधीनत्वंकल्प्यं सर्व्वत्राध्यापकपरिकल्पनस्यासम्भवा-दिति संक्षेपः। भोजनप्रकरणादवित्यादिनागमनप्रकरणाद्युपग्रहः। तेन गमनप्रकरणे-उक्तवाक्यान्तलवणान्वयबोधः। भोजनप्रकरणे इदं सैन्धवपदमश्वबोधं जनयत्वित्या-कारिकाया इवगमनप्रकरणे इदं सैन्धवपदं लवणबोधं जनयत्वित्याकारिकाया वक्तुरिच्छाया अभावादितिभाव॥ ५४॥

## ॥ तर्कामृतम्॥

वृत्त्या विना शब्देन नान्वयबोधो जन्यते। वृत्तिर्द्विधा शक्तिर्ल्लक्षणा च। शक्तिर्घटादिपदस्य घटादौ। लक्षणा यथा गङ्गायां घोषः प्रतिवसति' इत्यत्र गङ्गापदार्थे प्रवाहे घोषान्वयानुपपत्त्या गङ्गापदस्य तीरे लक्षणा कल्प्यते। तया वृत्त्या उपस्थिते तीरे घोषः प्रतिवसतीत्यन्वयबोधो भवति। गौणी वृत्तिरपि लक्षणैव। यथा 'अग्निर्म्माणवकः' 'गौर्व्वाहीकः'। अत्र लक्षणयागन्यादिसादृश्यं प्रतीयते॥ ५५॥

## ॥ विवृतिः॥

वृत्तिज्ञानशाव्दबोधयोः स्वतन्त्रान्वयव्यतिरेकशालितयाहेतुमद्भावादत्रव्यतिरेकं दर्शयति वृत्त्या विनेति। वृत्तिज्ञानाभावे सतीत्यर्थः। तेन शक्त्यारव्यवृत्तेरीश्वरेच्छाया सार्व्वकालिकत्वेऽपि न क्षतिः। वृत्तिश्चसामान्यतोऽर्थस्मृत्यनुकूलः शाव्दोधौपयिकः सम्बन्धः। स चार्थप्रतियोगिकः पदप्रतियोगिको वा ग्राह्यः। तेन पदविशेष्यकादपि सङ्केताज्जनिताया अर्थोपस्थितेर्वृत्त्यापदजन्यत्वनिर्व्वाहः। शब्देननान्वयबोधइति। घटादिपदे श्रूयमाणेऽपि तत्पदस्यवृत्तिमजानतो जनस्य तस्मादर्थोपस्थित्यसम्भवाच्छाव्द बोधो न सम्भवतीत्यर्थः। तथाच वृत्त्या पदार्थोपस्थितिः शाव्दबोधे व्यापार इति भावः। तेन वृत्तिज्ञानाभाववतः पुंसः श्रूयमाणशब्दात् समवायेनाकाशोपस्थितावपि नाकाशविषयकः शाब्दबोधः।

वृत्तिं विभजते द्विविधेति। विधाद्वयं दर्शयति शक्तिर्ल्लक्षणा चेति। एतेन व्यञ्जनादेर्वृत्तित्वव्यवच्छेदः सूचितः सामान्यधर्म्मावच्छिन्नानां यावत्संख्यकविशेष-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

धर्म्मपुरष्कारेणाभिधानस्य तदतिरिक्तमंख्यावच्छिन्नव्यवच्छेदार्थकताया व्युत्पत्तिसिद्धित्वात्। शक्तिं निरूपयितुमाह शक्तिर्घटादीत्यादि। अत्र षष्ठ्यर्थः प्रतियोगित्वं, सप्तम्यर्थस्त्वनुयोगित्वं, तयोश्च निरूपकत्वसम्बन्धेनान्वयः। तथाच घटादिपदनिष्ठप्रतियोगितानिरूपकत्वे सति घटाद्यर्थनिष्ठानुयोगितानिरूपकः 'घटादिपदाद्घटादिर्बोद्धव्यः' इत्याकारकभगवत्सङ्केतः शक्तिरित्यर्थः पर्य्यवसितः। वस्तुतस्त्वत्र सङ्केताकारप्रदर्शनं नाभिमतमन्यथा पदानुयोगिकसङ्केताप्रदर्शनान्न्यूनतापत्तेः किन्तु घटादिपदस्यशक्यप्रदर्शनेन जातिशक्तिवादं निरसितं तथोक्तमिति ध्येयम्।

लक्षणां निरूपयितुमाद लक्षणेत्यादि। सा च शक्यसम्बन्धरूपा। सम्बन्धश्चानेकविधस्तत्रतत्रोहनीयः। अन्वयानुपपत्तेर्ल्लक्षणाबीजत्वं प्रदर्शयितुमवतारयति यथा गङ्गायामित्यादि। अन्वयानुपपत्त्येति। इदमुपलक्षणं 'यष्ठीः प्रवेशय' इत्यादावन्वयानुपपत्तिविरहेऽपि तात्पर्य्यानुपपत्तेर्ल्लक्षणाकल्पकत्वं बोध्यम्। तया वृत्त्येति। लक्षणाख्यवृत्त्येत्यर्थः। लक्षणाया वृत्तित्वानभ्युपगमे गङ्गापदस्य तीरेऽसङ्केतित्त्वात्तीरानुपस्थितौ तीरे घोष इत्यन्वयबोधो न स्यादिति भावः। इत्थञ्च शक्तिस्थले घटाद्यन्वयबोधजनकघटाद्यर्थोपस्थितौ घटादिपदत्वावच्छिन्नविशेष्यतानिरूपितघटादिशक्तत्वप्रकारताशालिसङ्केतग्रहस्येव लक्षणास्थले तीराद्यन्वयबोधजनकतीराद्यर्थोपस्थितौ गङ्गादिपदत्वावच्छिन्नविशेष्यतानिरूपिततीरादिसम्बन्धिशक्तत्वप्रकारताशालिलक्षणाग्रहस्य कारणत्वमिति बोध्यम्।

मीमांसकास्तु 'अग्निर्म्माणवकः' इत्यत्राग्निशब्दान्मुख्यया वृत्त्या प्रतिपादितस्य दहनरूपार्थस्य माणवकशब्दप्रतिपाद्येन नवोपनीतविप्रबालकेन सार्द्धमन्वयासम्भवाद् गौण्याख्यवृत्त्यन्तरमङ्गीकार्य्यम्। तथा च तया वृत्त्याग्निशब्देनाग्निसदृशरूपार्थोपस्थापनान्नान्वयबोधानुपपत्तिरित्याहुः। तन्मतं निराकर्त्तुमाह गौणीत्यादि। लक्षणयैवेति। तथा चाग्निशब्दस्याग्निसादृश्यावच्छिन्ने लक्षणा स्वीकारेऽवश्यक्लृप्तलक्षणयैवोपपत्तौ न वृत्त्यन्तरकल्पनगौरवमितिभावः। अग्न्यादीत्यादिना गवादिपरिग्रहः। सादृश्यमिति। विजातीयकान्तिमत्त्वादिनेतिभावः। तथा च तत्राग्निसदृशो माणवको गोसदृशो वाहीक इत्यन्वयबोधः समुपपन्नः॥ ५५॥

## ॥ तर्कामृतम्॥

शक्तं पदं चतुर्व्विधम्। यौगिकं, रूढं, योगारूढं यौगिकरूढञ्च। आद्यं यथा—पाचकादिपदं योगार्थे पाककर्त्तरि शक्तम्। द्वितीयं यथा विप्रादिपदं रूढ्या ब्राह्मणवाचकम्। तृतीयं यथा पङ्कजादिपदं योगरूढ्या पङ्कजनिकर्तृत्वेन पद्मत्वेन च पद्म-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाचकम् । चतुर्थं यथा—उद्भिदादिपदं यौगिकं तरुगुल्मादेः रूढं यागविशेषस्य वाचकम् ॥ ५६ ॥

॥ विवृतिः ॥

एवं शक्तौ लक्षणायाञ्च वृत्तौ निरूपितायां शक्त्यार्थबोधकं शक्तं लक्षणयार्थबोधकं लाक्षणिकमितिपदद्वैविध्यं पर्य्यवसितम् । तत्र शक्तं विभजते शक्तं पदं चतुर्विधमिति । यद्यपि शव्दशक्तिप्रकाशिकायां रूढञ्च लक्षकञ्चैव योगरूढञ्च यौगिकम् । तच्चतुर्द्धा' इत्यत्र स्वयमेव यौगिकरूढत्वेन विभागो नाभिहितस्तथापि तत्र 'अपरै रूढयौगिकं मन्यतेऽधिकम्' इत्यनेनाभिहितस्य रूढयौगिकस्यैवात्र यौगिकरूढत्वेन प्रवेशादविरोधः ।

तत्र योगिकमुदारहति आद्यं यथेति । यादृशानुपूर्व्यवच्छिन्नं स्वघटकपदमात्रोपस्थाप्ययादृशार्थविषयकशाव्दबोधजनकताया विषयविधयावच्छेदकं तादृशानुपूर्व्वीमच्छव्दत्वं तादृशार्थे यौगिकत्वम् । पाचकादिपदमिति । अत्र समुदायघटकपदद्वयं—पच्धातुर्व्वुण्प्रत्ययश्च । तत्र धातुना पाकः प्रत्ययेण च कर्त्तृत्वमुपस्थाप्यते न तु समुदायेन कोऽप्यर्थः । ततश्च पाककर्त्तृत्वावच्छिन्नार्थे पाचकपदं यौगिकमित्याशयेनाह योगार्थ इत्यादि । तत्रादिना पाठकादिपदोपग्रहः ।

रूढमुदाहरति द्वितीयं यथेति । यादृशानुपूर्व्यवच्छिन्नं यादृशार्थोपस्थापकसङ्केतीयविशेष्यताविशिष्टं योगरूढादिभिन्नत्वे सति तादृशानुपूर्व्वीमच्छव्दत्वं तादृशार्थे रूढत्वम् । तथाच सङ्केतशून्यपाचकादिपदेषु योगरूढादिपङ्कजादिपदेषु च नातिव्याप्तिः । विप्रादीत्यादिना घटपटादिपदोपग्रहः । अत्र विप्रपदमुपनीतं विद्वांसं ब्राह्मणं बोधयित्विति सङ्केतसत्त्वादवयवार्थविरहाच्च रूढत्वमुपपद्यते । रूढेति । समुदायशक्तो त्यर्थः । ब्राह्मणवाचकमिति । उपनीतविद्वद्ब्राह्मणवाचकमित्यर्थः । तथाच स्मृतिः 'जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते । विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव हि' ॥ इति ।

योगरूढमुदाहरति तृतीयं यथेति । यादृशानुपूर्व्यवच्छिन्नं स्वघटकशव्दोपस्थाप्ययादृशार्थावच्छिन्नस्वोपस्थाप्ययादृशार्थान्वयवोधजनकताया विषयविधयावच्छेदकं तादृशानुपूर्व्वीमच्छव्दत्वं तादृशार्थावच्छिन्नतादृशार्थे योगरूढत्वम् । पङ्कजादिपदमिति । आदिना कृष्णसर्पादिपदस्योपग्रहः । केवलयोगादरे शैवालादौ केवलरूढ्यादरे च स्थलपद्मादावतिव्याप्तिः स्यादत आह योगरूढ्येति । अवयवशक्त्या समुदायशक्त्या-चेत्यर्थः । अत्र द्वाववयवौ पङ्कशव्दो उप्रत्ययान्तो जन्धातुश्च । तत्राद्यावयवेन पङ्कस्यान्त्यावयवेन च जनिकर्त्तृत्वस्योपस्थापनादवयवशक्त्या पङ्कजनिकर्त्तृत्वं समुदाय-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शक्त्या च पद्ममुपस्थाप्यते। ततश्चपङ्कजपदात् पङ्कजनिकर्त्तृ पद्मभित्यन्वयबोधो-जायत इत्याशयेनाह पङ्कजनिकर्त्तृत्वेनेत्यादि।

यौगिकरूढ़मुदाहरति चतुर्थं यथेति। यादृशानुपूर्व्यवच्छिन्नं स्वातन्त्र्येण यौगिकार्थप्रतिपादकत्वे सति रूढ्यर्थप्रतिपादकं तादृशानुपूर्व्वीमच्छब्दत्वं तन्नदर्थे यौगिक-रूढ़त्वम्। योगरूढ़स्यापियुगपद्यौगिकार्थप्रतिपादकत्वविशिष्टरूढ़ार्थप्रतिपादकत्वात् स्वातन्त्र्येणेति। उद्भिदादिपदमिति। आदिना मण्डपादिपदस्य परिग्रहः। पङ्क-जादिपदं युगपदवयवसमुदायशक्तिभ्यां पङ्कजनिकर्त्तृ पद्ममित्यन्वयबोधं जनयति न तु योगार्थं विना रूढ्यर्थस्य नवा रूढ्यर्थं विनायोगार्थस्य बोधं जनयति किन्तूद्भिदादिपदं यदावयवसमुदायशक्त्यादेरेकतरेणार्थं बोधयति न तदापरतरेणेति योगरूढ़स्थले योगार्थाविनाभूतो रूढ्यर्थः यौगिकरूढ़स्थले तु तद्विनाभूत इति विशेष इत्याशयेनाद यौगिकं तरुगुल्मादेरित्यादि ॥ ५६ ॥

## ॥ तर्कामृतम् ॥

लक्षणा द्विविधा, जहत्स्वार्थाऽजहत्स्वार्था च। आद्या यथा गङ्गायां घोष इत्यादौ। द्वितीया यथा सर्व्वे छत्रिणो यान्तीत्यादौ। अत्र छत्रिण स्तदितरस्यापि गमनान्वयः ॥५७ ॥

## ॥ विवृतिः ॥

लक्षकपदभेदमभिधा तुंलक्षणां विभजते लक्षणा द्विविधेति। तथा च लक्षणाद्वै-विध्याल्लक्षकपदमपि द्विविधमितिभावः। यद्यपि शब्दशक्तिप्रकाशिकायां "जहत्-स्वार्थाऽजहत्स्वार्था निरूढाधुनिकादिकाः। लक्षणा विविधा स्ताभिर्ल्लक्षकं स्यादने-कधा" इत्यभिहितं तथापि निरूढादिषु जहत्स्वार्थत्वस्य सत्त्वादत्र द्विविधेत्युक्त-मित्यविरोधः।

जहत्स्वार्थेति। जहत्-शाब्दबोधं त्यजत्, स्वार्थं—स्वाश्रयशक्यं, यस्या इति; जहाति—अपैति, स्वार्थो यस्यां सा इति वा वहुव्रीहिः। एवमजहत्स्वार्थेत्यत्रापि। जहत्स्वार्थामुदाहरत्याद्या यथेति। गङ्गायां घोष इत्यादाविति। अत्र गङ्गापदस्य तीरत्वेन रूपेण लक्षणेत्यर्थः। तथा च शक्यावृत्तिधर्म्मावच्छिन्नलक्षणा जहत्स्वार्थ-लक्षणा, तदाश्रयीभुतं पदं जहत्स्वार्थलक्षकमितिभावः। आदिना मञ्चाः क्रोशन्ती-त्यादेः परिग्रहः।

अजहत्स्वार्थामुदाहरति द्वितीया यथेति। सर्व्वे छत्रिणो यान्तीत्यादि। यत्र छत्रधारिभिः सार्द्धं छत्ररहिता अपि गच्छन्ति तत्र सर्व्वे छत्रिणो गच्छन्तीति प्रयुक्ते

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

छात्रपदस्य छत्र्यछत्रिषु लक्षणेति भावः। तथा च शक्यलक्ष्योभयवृत्तिधर्म्मपुरष्कारेणान्वयवोधजनिका लक्षणाऽजहत्स्वार्थलक्षणा, तदाश्रयीभुतं पदमजहत्स्वार्थलक्षकमिति भावः। आदिना काकेभ्यो दधि रक्ष्यतामित्यादेरुपग्रहः। पटादिपदस्य नीलपटादौ शक्यवृत्तिधर्म्मपुरष्कारेणाप्यजहत्स्वार्थलक्षणा क्वचित् भवतीतिवोध्यम् ॥ ५७ ॥

## ॥ तर्कामृतम ॥

अथ शाब्दबोधप्रक्रिया—"देवदत्तो ग्रामं गच्छति" इत्यत्र ग्रामकर्म्मकगमनजनककृतिमानित्यन्वयबोधः। द्वितीयाया अर्थः कर्म्मत्वं, धातोर्गमनं, जनकत्वं संसर्गमर्य्यादालभ्यं, न कृतिमान् लदो वर्त्तमानत्वं, आख्यातस्य कृतिः, तत् संसर्गः संसर्गमर्य्यादालभ्यः। यत्र कर्त्तरिकृते र्बाधस्तत्र आख्यातस्य व्यापारादौ लक्षणा, यथा "रथो गच्छति" इत्यत्र गमनजनकवर्त्तमानव्यापारवान् रथः। "दधि पश्यति" इत्यादौ द्वितीयालोपस्थले दधिशब्द एवाजहत्स्वार्थलक्षणया दधिकर्म्मत्वं बोधयति। एकवचनाद्युपस्थितमेकत्वादि सर्व्वत्र प्रथमादिपदमुपस्थापयति ॥ ५८ ॥

## ॥ विवृतिः ॥

शाब्दबोधोत्पादप्रक्रियां निरूपयितुमाह अथशाब्देत्यादि। यद्यपि घटपटादिशब्दजन्यबोधप्रक्रियाप्रदर्शनेनापि शाब्दवोधप्रक्रियाप्रदर्शनं निर्व्वहति तथापि क्रियाकारकादिविचित्रपदसमभिव्याहारस्थले कीदृशी शाब्दवोधप्रणालीत्याकाङ्क्षायामाह देवदत्त इत्यादि। इदमुपलक्षणं "गच्छति ग्रामं देवदत्तः" इत्यादावपि योजनया वक्ष्यमाणाकारान्वयवोधोत्पादात्। पर्य्यवसितशाब्दवोधस्वरूपमाह ग्रामकर्म्मकेत्यादि। ग्रामकर्म्मकत्वं—ग्रामनिष्ठकर्म्मतानिरूपकत्वं, तत्रकर्म्मत्वं नाम क्रियाजन्यफलशालित्वम्। वस्तुतः फलत्वमेव कर्म्मत्वं क्रियाया धातुना जन्यत्वस्य च संसर्गमर्य्यादयालाभसम्भवात्।

प्रोक्तशाब्दवोधे येन पदेन यस्यार्थस्योपस्थितिस्तन्निर्द्दिशति द्वितीयाया अर्थ इत्यादि। कर्म्मत्वमिति। "कर्म्मणि द्वितीया" इत्यनुशासनादिति भावः। धातोरिति। अर्थ इति पूर्व्वेणान्वेति। एवमग्रेऽपि। अन्विताभिधानवादिभिर्म्मीमांसकगुरुभिरन्वयप्रतियोगिपदार्थयोः संसर्गेऽपि शक्तेः स्वीकारादाह संसर्गमर्य्यादालभ्यमिति। आकाङ्क्षाभास्यमित्यर्थः। आकाङ्क्षा चाव्यवहितपूर्व्वत्वादिना संसर्गेण तत्पदविशिष्टतत्पदत्वरूपा। अत्र च गमेस्तिपासार्द्धमाकाङ्क्षाजनकत्वरूपसंसर्गभासिकेति भावः। एवमन्यत्रापि।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लट्त्वाख्यातत्वयोः समानाधिकरणत्वेऽप्यसमनियतत्वाल्लट्त्वेन वर्त्तमानत्वस्याख्यातत्वेन च कृतेरुपस्थापकत्वमित्युपस्थितिजनकतावच्छेदकं विशिनष्टि लट इत्यादि। वर्त्तमानत्वमिति। "वर्त्तमाने लट्" इत्यनुशासनादिति शेषः। वर्त्तमानत्वञ्च तत्तच्छब्दप्रयोगाधिकरणकालत्वरुपम्। तदवच्छिन्नस्य चाधेयताविशेषसम्बन्धेन कृतावन्वयः। न च कालत्वस्याखण्डस्य पचनादिपूर्व्वोत्तरकालेऽपि सात्त्वात्तत्रतत्र पचतीत्यादिप्रयोगापत्तिरिति वाच्यं कालत्वव्याप्यधर्म्मेणारम्भतः परिसमाप्तिपर्य्यन्तस्थायि तत्तत्स्थूलकालस्योपादेयत्वात्।

आख्यातस्य कृतिरिति। कृतेरुपस्थापनादेव प्रथमान्तपदोपस्थाप्ये देवदत्तादौ विशेषणतया तदन्वयेन कृतिविशिष्टस्य कर्त्तुर्बोधोपपत्तेरिति भावः। अतएव गच्छतीत्यादौ गमनं करोतीत्यादि यत्नार्थककरीतिना सर्व्वाख्याते विवरणं सङ्गच्छते। तत्सम्बन्ध इति। समवायस्यावच्छेदकत्वाख्यस्वरूपसम्बन्धस्य वात्र सम्बन्धत्वं बोध्यम्। तच्च देवदत्तादिशब्दस्यात्मवाचित्वे शरीरवाचित्वे वा यथायथं योज्यम्। न च व्यापारसत्त्व एव किं करोतीति प्रश्नोदयात् कृञो व्यापारार्थकत्वं वाच्यं, एवञ्चाख्यातस्यापि व्यापारार्थत्वमस्तु तथैवं करोतिना सर्व्वाख्याते विवरणस्योपपत्तेरिति वाच्यं चैत्रीयजलसेकादिरूपव्यापारस्य घट इवाङ्कुरेऽप्यविशिष्टत्वाद् घटश्चैत्रेण कृतोऽङ्कुरस्तु न कृत इति विषयविभागानुपपत्तेः कृञो व्यापारार्थकत्वकल्पनाऽसम्भवात्कृतित्वजातेराख्यातशक्यतावच्छेदकत्वे व्यापारत्वापेक्षया लाघवाच्च। अत्र कृतित्वं पुनरिष्टसाधनताधीजन्यतावच्छेदकप्रवृत्तित्वरूपं बोध्यम्। तेनेश्वरकृतेर्ज्जन्यमात्रं प्रतिहेतुत्वेऽपि "ईश्वरः पचति" इत्यादयो न प्रयोगाः। नन्वेवं "ईश्वरो वेदं वक्ति" "कृष्णो मथुरायां विहरति" इत्यादि प्रयोगानुपपत्तिरिति चेन्न तत्राख्यातस्य व्यापारे लक्षणाया अभ्युपगन्तव्यत्वात्।

इदन्तु बोध्यं—"देवदत्तो ग्रामं गच्छति" इत्यादौ सुप्तिङ्घटितसप्तषव्यन्यतमत्वस्य तत्तद्धर्म्माणां वा गुरुतयैकत्वशक्ततानवच्छेदकत्वान्न तिङश्चैत्रादावेकत्वानुभावकत्वं किन्तु "चैत्रो मैत्रश्च गच्छतः" "चैत्रो मैत्रो देवदत्तश्च गच्छन्ति' इत्यादिप्रयोगदर्शनादाख्यातद्विवचनवहुवचनयोः संख्या वाचकत्वमावश्यकममेवेति।

यत्तु वैयाकरणैः "चैत्रः पचति" इत्यादौ "पाककर्त्ता चैत्रः" इत्यादिविवरणदर्शनादाख्यातस्य कर्त्तैवार्थ इत्युक्तं। तन्न। प्रातिपदिकार्थख्यातार्थयोरभेदान्वयस्याव्युत्पन्नत्वाच्छक्यतावच्छेदकगौरवापत्तेश्च। आख्यातस्य कृतिवाचकत्वे "रथो गच्छति" इत्यादावचेतनरथादौ कृत्यभावात् प्रसक्तामनुपपत्तिं परिहर्त्तुमाह यत्र कर्त्तरि कृतेरिति। व्यापारादाविति। धात्वर्थानुकूलव्यापारादावित्यर्थः। यत्र

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कर्त्तरि व्यापारस्य वाध स्तत्र "चैत्रो भयं करोति, निद्रां करोति, स्थितिं करोति" इत्यादावाख्यातस्याश्रयत्वे लक्षणावाच्येत्याशयेनादिपदम्। लक्षणेति। निरूढ-लक्षणेत्यर्थः। नव्यास्तु "रथो गच्छति" इत्यादौ गमनाश्रयतावान् रथ इति वोधोपगमादाख्यातस्याश्रयत्वलक्षणयैवोपपत्तौ न व्यापारे लक्षणा युक्तेति प्राहुः। मीमांसकास्त्वाखयातस्य व्यापारत्वेनेव कृतौ शक्तिः "गच्छतिं, पचति" इत्यादौ व्यापारत्वेनैव कृतिवोधस्यानुभवसिद्धत्वात्। न च कृतित्वस्य प्रवृत्तिनिमित्तत्वे लाघवमिति वाच्यं लघुधर्म्मपुरष्कारेण शक्तेः सविवादत्वे लाघवस्याकिञ्चित्-करत्वादिति वदन्ति। रथो गच्छतीत्यत्र समुदितवाक्यार्थवोधस्वरूपं प्रदर्शयति गमनजनकेति। अत्रापि जनकत्वाद्युपस्थितिः पूर्व्ववद्वोध्या।

ननु "कर्म्मणि द्वितीया" इत्यनुशासनाद्देवदत्तो ग्रामं गच्छतीत्यादौ द्वितीयायाः कर्म्मत्वोपस्थापकत्वं युज्यते, यत्र च नपुंसकात् स्यमोर्ल्लोपः" इत्याद्यनुशासनेन द्वितीया लुप्यते तत्रानुपपत्तिरतस्तत्परिहर्त्तुमाह दधि पश्यतीत्यादाविति। दधि कर्म्मत्वमिति। दधिशव्दस्य दधिकर्म्मकत्वावच्छिन्ने लक्षणेतिभावः। अत्र च क्रियाविशेषणस्थल इव प्रातिपदिकार्थस्य धात्वर्थेऽन्वयो वोध्य इति ध्येयम्। आदिना "वारि पिवति" इत्यादेः परिग्रहः। ननु "द्वयेकयोर्द्विवचनैकवचने वहुषु वहुवचनम्" इत्याद्यनुशासना-देकवचनत्वादिनैकत्वाद्यर्थकत्वं वाच्यं, एवञ्चाख्यातैकवचनस्याप्येकत्वार्थकत्वमायातं, तच्चाप्रयोजनकं कर्त्त्राद्येकत्वस्य सुवेकवचनेनैव निर्व्वाहादत आह एकवचनाद्यपस्थित-मित्यादि। अत्रादिपदाभ्यां द्विवचनद्वित्वाद्योरुपग्रहः। वस्तुतस्त्वत्रादिपदद्वयमनति-प्रयोजनकमेव "घटः पटश्च स्तः" "घटः पटो मठश्च सन्ति" इत्यादि प्रयोगानुरो-धादाख्यातद्विवचनवहुवचनयोर्द्वित्ववहुत्वार्थकतायाः स्वीकरणीयत्वात्। प्रथमादिपद-मित्यादि। आदिना द्वितीयादेः परिग्रहः। तथाचैकवचनमात्रस्य नैकत्वार्थकत्वं किन्तु प्रथमाद्येकवचनस्यैवेति भावः। एवञ्चाख्यातैकवचनस्य प्रथमाद्येकवचनत्वा-भावान्नैकत्वार्थकत्वं परन्तु "सि" "अम्" इत्यादेरेव तथात्वात्तदर्थकत्वमिति तात्-पर्य्यमवधेयम्॥ ५८॥

॥ तर्कामृतम्॥

देवदत्तेन गम्यते ग्रामः" इत्यस्य देवदत्तवृत्तिकृतिजन्यगमनजन्यफलशाली ग्राम इत्यर्थः। वृत्तित्वं संसर्गवललभ्यं। तृतीयार्थश्चकृतिः। जन्यत्वं संसर्गः। गमनं धात्वर्थः। जन्यत्वं संसर्गः। फलं कर्म्मात्मने पदार्थः। शालित्वं संसर्गः॥ ५९॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ विवृतिः ॥

कर्त्तरि वाच्ये शाब्दबोधप्रकारं दर्शयितुमाह देवदत्तेनेति । पर्य्यवसितशाब्दबोध-मुपवर्णयति देवदत्तवृत्तीत्यादि । संसर्गबललभ्यमिति । आकाङ्क्षाभास्यमित्यर्थः । एवमुत्तरत्रापि । तृतीयार्थश्च कृतिरिति । "कर्त्तृकरणयो स्तृतीया" इत्यनुशासनादिति भावः । "कर्त्तरि रुचादि ङानुबन्धेभ्यः" इत्यनेन कर्त्तरि "आत्मनेपदानिभाव कर्म्मणोः" इत्यनेन च भावे आत्मनेपदस्य विहितत्वेऽपि कर्त्तृख्याते फलस्य द्वितीयार्थत्वाद्भावे फलविरहाच्चाह फलं कर्म्मात्मिनेपदार्थ इति । फलन्तु संयोगो विभागश्च । तत्र "गम्यते" इत्यादौ संयोगः "त्यज्यते" इत्यादौ च विभागः फलत्वेन भासत इति बोध्यम् । शालित्वमिति । आश्रयत्वमित्यर्थः ॥ ५९ ॥

॥ तर्कामृतम् ॥

भावप्रत्यये तु "देवदत्तेन सुप्यते" इत्यस्य देवदत्तवृत्तिकृतिजन्यः स्वाप इत्यर्थः भावप्रत्ययस्थले फलाभावादात्मने पदार्थो न भासते ॥ ६० ॥

॥ विवृतिः ॥

अथ भावे वाच्ये शाब्दबोधप्रकारं वर्णयितुमाह भावप्रत्यय इति । धात्वर्थमात्रं विशेष्यविधयावगाहमानायां प्रतीतावित्यर्थः । शाब्दबोधस्वरूप दर्शयति देवदत्त-वृत्तीत्यादि । अत्रापि वृत्तित्वजन्यत्वे संसर्गमर्य्यादालभ्ये, कृतिस्तु तृतीयार्थ इति बोध्यम् । ननु गम्यते इत्यत्रेव सुप्यते इत्यत्राप्यात्मनेपदार्थो न कथं भासत इत्याशङ्कां निराकर्त्तुमाह भावप्रत्ययस्थले इत्यादि । न भासत इति । "लः कर्म्मणि भावे चाकर्म्मकेभ्यः" इति सूत्रेण सकर्म्मकेभ्यः कर्म्मणि कर्त्तरि चाकर्म्मकेभ्यो भावे कर्त्तरि च लकारविधानात् सकर्म्मकत्वस्य च क्रियाजन्यफलशालित्वरूपकर्म्मत्व-घटितत्वत् कर्म्माख्याते आत्मनेपदार्थः फलं भासितं युज्यते, नत्वेवं भावाख्याते कर्म्मविरहेणफलविरहादितिभावः ॥ ६० ॥

॥ तर्कामृतम् ॥

भविष्यत्त्वं लृटोऽर्थः, तच्च विद्यमानप्रागभावप्रतियोग्युत्पत्तिकत्वम् । तेन "गमिष्यति" इत्यत्र विद्यमानप्रागभावप्रतियोग्युत्पत्तिकगमनानुकूलकृतिमानित्यर्थः । लुटोऽर्थोऽनद्यतनत्वमपि । लुङोऽर्थ उत्पत्तिर्भूतत्वञ्च भूतत्वमतीतत्वं, तच्चोत्-पत्तावन्वेति । तथाच विद्यमानध्वंसप्रतियोग्युत्पत्तिकत्वं लब्धम् । लिटोऽनद्यतनत्वं परोक्षत्वं अतीतत्वञ्चार्थ । तदन्वयः पूर्व्ववदुत्पत्तौ । लङोऽनद्यतनत्वमतीतत्वञ्चार्थः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विधिलिङोऽर्थः कृतिसाध्यत्वे सति बलवदनिष्टाजनकेष्टसाधनत्वम्। "स्वर्गकामो यजेत" इत्यादौ कृतिसाध्यबलवदनिष्टाजनकेष्टसाधनयागकर्त्ता स्वर्गकाम इत्यर्थः। आशीर्लिङ्लोटोरर्थो वक्त्रिच्छाविषयत्वम्। तेन "घटमानय" इत्यत्र घटकर्म्मकमदिच्छाविषयानयनानुकूलकृतिमान् त्वमित्यन्वयबोधः। व्याप्यक्रियया व्यापकक्रियाया आपादनं लृङोऽर्थः। तात्पर्य्यवशात् क्वचिद्भूतत्वं क्वचिद् भविष्यत्वञ्च लृङाबोध्यते॥ ६१॥

॥ विवृतिः॥

लकारस्य दशविधत्वाद्वर्त्तमानत्वार्थकलडन्तप्रयोगेऽन्वयबोधप्रकारमुपवर्ण्यवर्त्तमानत्वघटित-भूतत्वभविष्यत्वयोर्मध्ये प्रागभावघटितत्वेनाभ्यर्हितभविष्यत्त्वार्थकलकारान्त प्रयोगेऽन्वयबोधस्वरूपं सन्दर्शयितुमाह भविष्यत्त्वं लृटोऽर्थ इति। तत्त्वेति। अत्र तच्छब्देन भविष्यत्त्वं परामृश्यते। विद्यमानप्रागभावेत्यादि। विद्यमानस्य प्रागभावस्य प्रतियोगिनी उत्पत्तिर्यस्य तत्त्वमित्यर्थः। तत्र विनष्टप्रागभावप्रतियोग्युत्पत्तिकवर्त्तमानघटादिविशेष्यकभविष्यतीति प्रयोगवारणाय विद्यमानेति प्रागभावविशेषणम्। विद्यमानाभावप्रतियोग्युत्पत्तिकालीनघटादि विशेष्यकभविष्यतीति प्रयोगवारणाय प्रागभावेति। कार्य्यस्य प्रथमक्षणे उत्पत्तिः द्वितीयक्षणे आत्मलाभ इति प्राचीनमते प्रथमक्षणे भविष्यतीति प्रयोग वारणायोत्पत्तिप्रवेशः। अन्वयबोधस्वरूपमाह विद्यमानेति। अत्राप्यनुकूलत्वस्य संसर्गमर्य्यादालभ्यत्वं बोध्यम्।

अथ लुडर्थं निरूपयितुमाह लृटोऽर्थ इति। अनद्यतनत्वमपीति। अनद्यतनत्वमद्यतनभिन्नत्वम्। अद्यतनत्वञ्चातीतोत्तररात्रिमध्यवर्त्त्यहस्त्वम्। दुर्गमते त्वतीतरात्रिचतुर्थयामावध्यागामिरात्रिप्रथमयामपर्य्यन्तकालत्वमद्यतनत्वम्। तथाचानद्यतनत्वस्य भूतकालेऽपि सत्त्वादपिना भविष्यत्त्वं समुच्चीयते। भविष्यत्त्वस्याद्यतन द्वितीयक्षणादावपि सत्त्वादनद्यतनत्व प्रवेशः। एवञ्चानद्यतनत्वे सति भविष्यत्वं लुडर्थ इति भावः। अन्येतु 'अद्यतनी क्रिया' इत्यादि दर्शनादद्यतनत्वं न कालधर्म्मः किन्तु क्रियान्वयीति वदन्तोऽद्यतनत्वं प्रकृतशब्दप्रयोगाधिकरणदिनवृत्तित्वं तदभावश्चानद्यतनत्वं क्रियायामेवान्वेतीत्याहुः। वस्तुतस्त्वनद्यतनत्वविशिष्टभविष्यत्त्वापेक्षया लाघवेन श्वस्तनत्वमेव लुडर्थोवाच्यः। तदुक्तं "धात्वर्थे श्वस्तनत्वस्यबोधिका तिङ् लुङुच्यते" इति। श्वस्तनत्वञ्चाव्यवहितोत्तराहस्त्वरूपं व्यवहितोत्तरदिनादौ लृट एव प्रयोगस्य साधुत्वादिति ध्येयम्। तथाच "पुत्र स्ते भविता" इत्यादौ अव्यवहितोत्तरदिनवृत्तिभवनाश्रयः पुत्र इत्यन्वयबोधः। "श्वः पक्ता" इत्यादौतु श्वः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पद-लुड्भ्यामेकमेव 'श्वस्तनत्वं बोध्यते सम्भेदे नान्यतरवैर्व्यर्थमिति न्यायादतो न द्विधाश्वस्तनत्वभानप्रसङ्गः।

भविष्यदर्थकलकारं निरूप्यातीतत्वार्थकलकारनिरूपणमारभते लुङोऽर्थ इति। उत्पत्तिर्भूतत्वञ्चेति। भूतत्वमात्रस्यार्थत्वे महानसे वह्निसंयोगस्य विद्यमानतादशायां "वह्निर्म्महानसेन सह समयुजत्" इति प्रयोगो न स्यादत उक्तमुत्पत्तिरिति। तन्मात्र-स्यार्थत्वे तु प्रथमक्षणे "घटोऽभूत्" इति प्रयोगोपपत्तेराह भूतत्वमिति। उत्पत्ति-राद्यक्षणसम्बन्धः, अतीतत्वञ्च विद्यमानध्वंसप्रतियोगित्वम्, तदुभयोरेकक्रियायां विरुद्धत्वादाहोत्पत्तावन्वेतीति। पर्य्यवसितार्थमाह विद्यमानेत्यादि। विद्यमानस्य ध्वंसस्य प्रतियोगिनी उत्पत्तिर्यस्य तत्त्वमित्यर्थः। एवञ्चागमदित्यादौ विद्यमान-ध्वंसप्रतियोग्युत्पत्तिकगमनानुकूलकृतिमानित्यन्वयबोधः। एवञ्च संयोगसत्त्व-दशायामपि संयोगोत्पत्तिध्वंसस्य सत्त्वात् 'समयुजत्' इति प्रयोग उपपद्यते। वस्तुतो लुङोऽतीतत्वमात्रमर्थः। अतीतत्वञ्च वर्त्तमानध्वंसप्रतियोगित्वरूपं वर्त्तमान-ध्वंसरूपम्बा स्वरूपसम्बन्धेन प्रतियोगित्वसम्बन्धेन व्याख्यातार्थे कृतावन्वेति। तथा च "अगमत्" इत्यादौ वर्त्तमानध्वंसप्रतियोगिगमनानुकूलकृतिमानित्याद्यन्वय बोधः। यत्र चाख्यातार्थो न कृतिस्तत्र "वह्निर्म्महानसेन सह समयुजत्" इत्यादौ तु संयोगसत्त्व-दशायां कस्यचित् संयोगस्य ध्वंसस्तत्प्रतियोगित्वंवाऽतीतत्वं धात्वर्थे एवान्वेतीत्य-भ्युपेयत इति दिक्।

लिङर्थं निरूपयति लिट इति। अनद्यतनत्वमिति। अस्यार्थस्तु पूर्व्वमुक्तः। अनद्यतनत्वस्य ह्यस्तनेऽपि सत्त्वादाह परोक्षत्वमिति। वक्तृसाक्षात्काराविषयत्व-मित्यर्थः। तेन ह्यस्तनस्यापि धात्वर्थस्य वक्तृसाक्षात्कारविषयत्वे न लिटः प्रयोगः। अनद्यतनत्वे सति परोक्षत्वस्य गर्भिण्याः पुत्रभवनादौ सत्त्वाइ 'गर्भिण्याः पुत्रो भविष्यति' इत्यादौ 'गर्भिण्याः पुत्रो बभूव' इति लिटः प्रयोगवारणार्थमुक्तमतीतत्व-मिति। तदर्थस्तु पूर्व्ववद्बोध्यः। संयोगसत्त्वदशायामपि "संयुयुजे" इत्यादि प्रयोगोपपत्तये चकारेणोत्पत्तिरनुकृष्यते। तेन तदन्वयः पूर्व्ववदुत्पत्ताविति सङ्गच्छते। तत्र तदन्वय इत्यस्यातीतत्वस्यान्वय इत्यर्थः। तथा च "कंसं जघान" इत्यादौ अनद्य-तन-वक्तृसाक्षातकाराविषय-वर्त्तमानध्वंसप्रतियोग्युत्पत्तिककंसकर्म्मकहननानुकुलकृति-मानित्याद्यन्वयबोधः पर्य्यवसन्नः। नचानद्यतनत्वस्य परोक्षत्वविशिष्टातीतत्वव्या-पकत्वात् पृथग्लिङर्थत्वमनुपादेयमेवेति शङ्क्यं, अद्यतनस्याप्यतीतस्य कार्य्यान्तर-व्यासक्तचिन्ततया परोक्षत्वसम्भवात्। अनद्यतनत्वपरोक्षत्वातीतत्वसत्त्वेऽपि "अभून्नृपो विबुधसखः परन्तपः" "अध्यास्त सर्व्वर्त्तुसुखामयोध्याम्" इत्यादिप्रयोगस्य लिङन्तत्वाभावः परोक्षत्वाविवक्षया समाधेयः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लङर्थं निरूपयति लङ इति। अनद्यतनत्वमिति पूर्व्ववदर्थकम्। तन्मात्रस्य भविष्यत्यपि सत्त्वादाहातीतत्वमिति पूर्व्ववदर्थकम्। तन्मात्रस्याद्यतनातीतेऽपि सत्त्वादुक्तमनद्यतनत्वमिति। एवञ्च "अगच्छत्" इत्यादौ अनद्यतनविद्यमानध्वंस-प्रतियोग्युत्पत्तिकगमनानुकूलकृतिमानित्याद्यन्वयबोधः।

विधिलिङोऽर्थं निरूपयति विधिलिङ इति। सुमेरुशृङ्गारोहणादेर्व्विधेयत्व-वारणाय सत्यन्तम्। परदाराभिगमनादेर्व्विधेयत्ववारणाय बलवदनिष्टाजनकेति। बहुतरवित्तव्ययकायक्लेशादिरूपानिष्टजनकस्यापि यागादेर्व्विधेयत्वाद्बलवत्त्वमनिष्ट-विशेषणम्। तच्च क्रियाजन्येष्टापेक्षयाधिकत्वेनगृहीतत्वम्। अतएव कामोपहत-चेता नरकादौ सुखापेक्षयाधिकत्वमप्रतिसन्धाय परदाराभिगमने प्रवर्त्तते। अजन-कान्तस्य निष्फलजलताड़नादौ सत्त्वात्तत्र विधेयत्वं वारयितुमाहेष्टसाधनत्वमिति। तत्रेष्टत्वं तावत् समभिव्याहृतवाक्योपस्थापितकामनाविषयत्वं स्वर्गौदनादिवैदिक-लौकिकनानाफलानुगमकम्। अतस्तत्तद्रूपेण तत्तत्फलानां विधिलिङः शक्यताव-च्छेदककोटावप्रवेशान्न शक्त्यानन्त्यप्रसङ्गः। यत्र च कामनावाचकं पदं न श्रूयते तत्र तदध्याहार्य्यम्। ततः 'अहरहः सन्ध्यामुपासीत' इत्यादिनित्यविधावपि नानु-पपत्तिः सन्ध्यामुपक्रम्याभिहिते 'सन्ध्यामुपासते ये तु नियतं संशितव्रताः। विधूत-पापास्ते यान्ति ब्रह्मलोकमनामयम्'॥ 'क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते। अनु-त्पत्तिं तथाचान्ये प्रत्यवायस्य मन्वते'॥ इत्यादौ नानाफलश्रवणात्। एवञ्च विधि-लिङ्स्ताद्दशार्थोपस्थितौ सत्यां तस्याश्च प्रवृत्तिं प्रतिहेतुत्वात् ततो यागादौ प्रवृत्तिरुत्पद्यत इति "यजेत" इत्यादिविधेः प्रवर्त्तकत्वमिति भावः। वस्तुतस्तु तादृशविशिष्टज्ञानस्य प्रवृत्तिं प्रति हेतुत्वे मानाभावाद्विधेः प्रवर्त्तकत्वानुरोधेन प्रवृत्ति-मन्तर्भाव्य पृथक्कार्य्यकारणभावकल्पने गौरवाद्विशेष्यविशेषणभावे विनिगमना-विरहेण शक्तिबाहुल्यप्रसङ्गात् "श्येनेनाभिचरन् यजेत" इत्यादिविधेरप्रामाण्या-पत्तेश्च विशिष्टस्यं विध्यर्थत्वं न युक्तं किन्तु कृतिसाध्यत्वादित्रितयस्य स्वातन्त्र्येनैव। नचोक्तत्रितयमन्तर्भाव्य कार्य्यकारणभावत्रयकल्पनस्यावश्यकत्वात् पुनर्गौरवमिति वाच्यं त्रयाणां क्वचित् कस्यचिद्विध्यर्थतया भानस्यानुभवसिद्धत्वेन गौरवस्य फलमुख-तयाऽदोषत्वात्। न च कृतिसाध्यत्वादित्रयाणां विध्यर्थत्वे मानाभाव इति वाच्यं "पंगुर्गिरिं न तरेत्" "तृप्तिकामो जलं न ताड़येत्" "न कलञ्जं भक्षयेत्" इत्यादिषु "गिरितरणं पंगुकृतिसाध्यत्वाभाववत्" जलताड़नं तृप्तिकामेष्टसाधनत्वाभाववत्" "कलञ्जभक्षणं बलवदनिष्टाजनकत्वाभाववत्" इत्याद्यन्वयबोधानामुत्पादानुभवस्यैव-मानत्वात्। नह्येतेषु प्रयोगेषु विशिष्टस्य विध्यर्थत्वं सम्भवति तत्र प्रथमे बलवद-निष्टाजनकेष्टसाधनत्वाभावस्य, द्वितीये कृतिसाध्यत्वविशिष्टबलवदनिष्टाजनकत्वा-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भावस्य, तृतीय कृतिसाध्येष्टसाधनत्वाभावक्ष्य च वाधात्। वस्तुतस्तु "धनं दद्यास्त्वमस्मभ्यम्" इत्यादिप्रयोगात् प्रार्थनादिकमपि विधिलिङर्थ इत्यन्यत्र विस्तरः।

भट्टाचार्य्यमते तु वाक्यं त्रिविधं विधिनिषेधार्थवादभेदात्। तत्र "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिभावविधौ विधिलिङर्थस्य धात्वर्थेऽन्वयः। "आरोग्यकामः कुपथ्यं नाश्नीयात्" इत्याद्यभावविधौ च तस्य धात्वर्यान्वितनञर्थेऽन्वयः। तेन तत्र कुपथ्याशनाभाव इष्टसाधनमित्यन्वयवोधः सम्पद्यते। निषेधवाक्येतु "न कलञ्जं भक्षयेत्" "रात्रौ श्राद्धं न कुर्व्वीत" "परदारान्न गच्छेत्" इत्यादौ विध्यर्थान्वितनञर्थस्य धात्वर्थेऽन्वय उपगन्तव्यः। तत्र तदेव निषेधवाक्यं यत्कर्तृ निर्व्विशेषेण प्रयुक्तमुपयुज्यते, अभावविधिवाक्यन्तु न तथेत्यनयोर्भेद इत्यवधेयम्।

अत्रान्वयवोधस्वरूपमुपदर्शयितुं विधिलिङन्त प्रयोगमुपन्यस्यति स्वर्गकाम इति। पर्य्यवसितान्वयवोधं प्रदर्शयति कृतिसाध्येत्यादि। यागकर्त्तेति। यागानुकूलकृतिमानित्यर्थः। तत्र यागो धात्वर्थः, अनुकूलत्वं संसर्गः, कृतिराख्यातार्थः। न च देवतोद्देशेन द्रव्यत्यागरुपयागस्येच्छाविशेषात्मकत्वात् कृतिसाध्यत्वाभावेनोक्तान्वयवोधो न सम्भवतीति वाच्यं यागानुकूलहविः सम्पादनादिरुपव्यापारस्य कृतिसाध्यत्वात् कृतेः परम्परया यागानुकूलत्वसम्भवात्।

यद्यपि "अल्पस्वरतरं तत्र पूर्व्वम्" इत्यनुशसनाल्लोट्शब्दस्य पूर्व्वनिपातो युक्तस्तथापि लिङ्त्वेन प्रथमापस्थितत्वादुक्तानुशासनस्यासार्व्वत्रिकत्वाच्चाशीर्लिङ्शब्दस्य पूर्व्वं निर्द्देशः। वक्त्रिच्छाविषयत्वमिति। तथा च "चैत्रो दीर्घायु र्भूयात्" इत्यत्र मदिच्छाविषयदीर्घायुर्भवनाश्रयश्चैत्र इत्यन्वयबोधः।

'लोडन्तप्रयोगे शब्दबोधस्वरुपं दर्शयितुमवतारयति घटमानयेति। यद्यपि कर्त्रिष्ठत्वे सति वक्त्रनुमतत्वरुपानुज्ञायां "चैत्रः पचतु" वक्त्रनुमतत्वे सति कर्त्रनिष्ट जनकत्वरुपाज्ञायां "शूलं प्रविश" इत्यादिप्रयोगदर्शनात् पृथक् पृथगेव लोडर्थो वाच्यस्तथापि तेषामर्थानामनुगमकमात्रयुक्तं वक्त्रिच्छा विषयत्वमिति। वस्तुतस्तु भावितायामाशीर्लिङः, तस्यां वर्त्तमानतायाञ्चलोटः, आशंसने च द्वयोरर्थत्वमुपेयमेव। तदुक्तं "आशीर्लिङाशंसनस्य भावित्वस्य च बोधिका" इति "चैत्रोक्ताज्जीवंतु भवानिति वाक्याच्चैत्राशंसाविषयवर्त्तमानजीवनवानित्येवं वोधः" इति च। अतएवाऽनुशासनमपि "भविष्यति भविष्यन्त्याशीः श्वस्तन्यः" पञ्चम्यनुमतावित्यत्र "कर्त्तुमिच्छतोऽनुज्ञानुमति, साच वर्त्तमानभविष्यद्विषयैव" "समर्थनाशिषोश्च" इत्यादिकम्। भट्टाचार्य्यास्तु "चैत्रो गच्छतु" इत्यादौ प्रवृत्त्युत्पादस्यावश्यम्भावाल्लोटो विध्यर्थकत्वं वाच्यं, विधिश्च प्रवर्त्तकज्ञानविषयो धर्म्मः कृति साध्यत्वादिर्प्राहुः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लकारार्थविचारमुपसंहर्त्तुमवष्ठिस्य लृङोऽर्थं निरूपयति व्याप्यक्रिययेति। क्रिया—धात्वर्थः। लृङोऽर्थ इति। तथा च काष्ठञ्चेदप्राप्स्यदोदनमप्यपक्ष्यच्चैत्र इत्यत्रौदनकर्म्मकपाकक्रियाया व्याप्यत्वात् काष्ठकर्म्मकप्राप्तिक्रियायाश्च व्यापकत्वा-पत्तेः फलीभूतोऽतीतकालावच्छेदेनौदनपाकाभाव प्रयोजककाष्ठप्राप्त्यभाववांश्चैत्र इत्यन्वयबोधः। वस्तुतस्त्वतीतादिकालावच्छेदेन क्रियातिपात एव लृङोऽर्थः। अतएव तन्त्रान्तरे लृङः क्रियातिपत्तिशब्दाभिलाप्यमपि सङ्गच्छते। क्रियातिपातश्च क्रियाविरहप्रयोजकक्रियान्तरविरहरूपः क्रियाविरहप्रयुक्तक्रियान्तरविरहरूपो वा न तु सामान्यतः क्रियाप्रतियोगिकाभावरूपोऽतीतकालावच्छेदेन काष्ठप्राप्त्यभाववानोदन-पाकाभाववांश्चेति समूहालम्वनं विनोक्तस्थलेऽन्वयबोधस्योपपादयितुमशक्यत्वेन गौरव-प्रसङ्गात्। एवञ्चोक्तस्थलेऽतीतकालावच्छेदेन काष्ठप्राप्त्यभावप्रयुक्तौदनपाका-भाववांश्चैत्र इत्यन्यन्वयबोध इति बोध्यम्। लृङो नियमतो नातीतत्वादिबोधकत्वमति प्रसङ्गादत आह तात्पर्य्यवशादिति। काष्ठञ्चेदप्राप्यदित्यादि प्रयोगमभिप्रेत्याह भूतत्वमिति। सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमप्यभविष्यदित्यादिप्रयोगाभिप्रायेणाह भविष्यत्त्वमिति। तत्र चापत्तेः फलीभूतोऽन्वयबोधस्तु भाविकालावच्छिन्नसुभिक्ष-भवनाभावप्रयोजकः सुवृष्टिभवनाभाव इत्याद्याकारकः। केचित्तु लृङः प्रयोगेऽभाव-भानमनुपगम्योक्तस्थले काष्ठप्राप्तिनिष्ठापादकतानिरूपितापाद्यतावदुत्पत्त्याश्रयोदन-पाक इत्यन्वयबोधः, एवमन्यत्रापीति वदन्ति। तच्चिन्त्यम्॥ ६१॥

## ॥ तर्कामृतम् ॥

सनः कर्त्तुरिच्छा अर्थः। सन्नुत्तराख्यातस्याश्रयत्वे लक्षणा, सविषयकार्थक-प्रकृतिकाख्यातस्याश्रयत्वे लक्षणाया "घटं जानाति" इत्यादौ क्लृप्तत्वात्॥ ६२॥

## ॥ विवृतिः ॥

अथ धात्वंशप्रत्ययानामर्थान्निरूपयितुमभ्यर्हितत्वादादौ सनोऽर्थं निरूपयति सन इति। इच्छति नैककर्त्तृकात्तुमन्तधातोर्व्विहितस्य सन इत्यर्थः। 'गुप्तिज्किद्भ्यः सन्' इत्यादिना विहितस्य स्वार्थिकसन इच्छार्थकत्वविरहेऽपि न क्षतिः। कर्त्तुरिच्छेति। अत्र कर्त्तृपदं धात्वर्थेनेच्छाया एककर्त्तृकत्वज्ञापनार्थं नतु कर्त्तृत्वस्य सनर्थघटकत्वार्थं वैयर्थ्यात्। तथा चेच्छैव सनोऽर्थः, तस्याञ्च विषयित्वसमानकर्त्तृ-कत्वोभयसम्वन्धेन धात्वर्थस्यान्वयः। एवञ्च "पिपक्षति चैत्रः" इत्यादौ स्वसमान-कर्त्तृकपाकविषयकेच्छाश्रयश्चैत्र इत्याद्यन्वयबोधः। नन्वाख्यातार्थस्य कृतेरभानात् सनर्थेच्छाया स्तस्यामन्वयासम्भवेन कृते र्भानासम्भवाच्चोक्तान्वयबोधोऽनुपपन्न इत्यत

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आह सन्नुत्तरेत्यादि। तथाचाख्यातलक्ष्यार्थे आश्रयत्वे सनर्थस्यान्वयसम्भवान्नानुपपत्तिरितिभावः। आख्यातस्याश्रयत्वलक्षकत्वं दृष्टान्तेन द्रढयितुमाह सविषयकार्थकप्रकृतिकेति। तथाच सविषयकार्थकज्ञादिधातोः प्रकृतित्वे यथाख्यातस्याश्रयत्वे लक्षणा तथाऽत्रापि। सविषयकार्थकसनः प्रकृतित्वादिति भावः। ननु "भवति" इत्यादौ भ्वादिधातोरिव "पिपक्षति" इत्यादावपि पचादिधातोरेव तिङ्प्रकृतित्वं युक्तं, नतु सनः, तस्य तिङ्प्रकृतित्वेऽनुशासनाभावात् प्रत्ययत्वाच्च। तथाच दृष्टान्तदार्ष्टान्तिकभावो न सङ्गच्छत इति चेन्न "ते धातवः" इत्याद्यनुशासनेन सनादिप्रत्ययान्तस्य पुनर्धातुसंज्ञाविधानात् "पिपक्षति" इत्यादौ "पिपक्ष" भागस्य धातुत्वोपगमेनाख्यातप्रकृतित्वस्य तिङश्च सविषयकार्थकप्रकृतिकत्वस्य च सम्भवात्। इत्थञ्च सनादीनां धात्वंशप्रत्ययत्वप्रवादोऽप्युपपद्यते। कृप्रन्वादिति। तत्राख्यातशक्यार्थप्रवेशे कारकविभक्तेः क्रियायामेव स्वार्थबोधकत्वनियमाद् घटविषयकज्ञानपर्य्यन्तस्य लब्धार्थस्याख्यातशक्यकृतावन्वयासम्भवः स्यादतो लक्षणाश्रयणीयेति भावः। नच तत्राप्यनुकूलत्वसंसर्गेन ज्ञानान्तस्य कृतावन्वययुपगम्य घटविषयकज्ञानानुकूलकृतिमानित्यन्वयबोध उपपादनीय इति वाच्यं आत्ममनोयोगादिघटितसामग्रीत एव ज्ञानोत्पत्तेः कृतेर्ज्ञानानुकूलत्वविरहात्। ज्ञानाश्रयत्वेनैवकृतकृत्यातायां कृतिपर्य्यन्तानुधावने गौरवाच्च। "पिपक्षिषति" इत्यादि प्रयोगस्तु "सनन्तान्नसनिष्यते" इत्याद्यनुशासनेन वारणीय इति संक्षेपः॥ ६२॥

## ॥ तर्कामृतम् ॥

यङोऽर्थः पौनःपुन्यम्। तत्त्वञ्च इदानीन्तनप्रकृत्यर्थसजातीयक्रियान्तरध्वंसकालीनत्वे सति वर्त्तमानादिकृतिविषयत्वम्। "पापच्यते" इत्यादौ तादृशकालीनत्वमेव यङा प्रत्याय्यते। आख्यातस्य चरमदलवाचकत्वान्न विशिष्टवाचकत्वं यङः। तदानीन्तनत्वञ्च स्थूलकालमादाय॥ ६३॥

## ॥ विवृतिः ॥

यङोऽर्थं निरूपयति यङोऽर्थ इति। तत्त्वमिति। पौनःपुन्यत्वमित्यर्थः। इदानीन्तनेति। अत्र क्रियान्तरत्वं न यथाश्रुतं, तथासतीदानीं द्विः पक्तरि "पापच्यते" इतिप्रयोगापत्तेः किन्तु क्रियोत्तरत्वविशिष्टक्रियात्वरूपम्; तथाच प्रकृत्यर्थसजातीयपूर्व्वदिवसीयपाकोत्तरत्वविशिष्टपाकध्वंसस्येदानीन्तनसकृत्पक्तर्य्यपि सत्त्वात् "पापच्यते" इति प्रयोगापत्तिरतस्तद्वारणायेदानीन्तनत्वं प्रथमक्रियाया विशेषणम्, नतु प्रकृत्यर्थस्य, अव्यावर्त्तकतापत्तेः, तच्च प्रयोगाधिकरणीभूतकालवृत्तित्वरूपम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. 5143



अन्तरा विजातीयक्रिया कर्त्तरि "पापच्यते" इत्यादि प्रयोगवारणाय सजातीयेत्युभयक्रियाविशेषणम्। साजात्यञ्च प्रकृत्यर्थतावच्छेदकधर्म्मपुरस्कारेण बोध्यम्। तेन विजातीयक्रियाणां मेयत्वादिना साजात्यस्य सत्त्वेऽपि न क्षतिः। अत्र समानकर्त्तृकत्वमपि निवेश्यम्, अन्यथा पुमन्तरीयपाकानन्तरं स्वकीयपाकदशायां "पापच्यते" इति प्रयोगप्रसङ्गः। सजातीयक्रिययो र्यौगपद्यानभ्युपगमादुक्तं ध्वंसेति। अतीते भविष्यति च काले पाकादिक्रियायाः पौनःपुन्यसम्भवादाहादीति। ननु लड़ादिना वर्त्तमानत्वादेराख्यातेन च कृते रुपस्थापनसम्भवाद्विशिष्टस्य यङर्थत्वे वैयर्थ्यमित्याशङ्कां परिजिहीर्पुराह पापच्यत इत्यादाविति। आदिना "बोभुज्यते" इत्यादेरुपग्रहः। तादृशकालीनत्वमिति, इदानीन्तनप्रकृत्यर्थसजातीयक्रियोत्तरत्वविशिष्ट क्रियाध्वंसकालीनत्वमित्यर्थः। प्रत्याय्यत इति। विशेषणतया मूलधात्वर्थे इत्या दः। तथाच "चैत्रः पापच्यते" इत्यादाविदानीन्तनपाकोत्तरत्वविशिष्टपाकध्वंसकालीनपाकविषयककृतिमांश्चैत्र इत्याद्यन्वयबोधः। वस्तुतस्तु यत्र पूर्व्वदिवसीयान्तिमक्षणद्वये पाकद्वयं कृत्वा परदिवसीयादिमक्षणे पचति तत्रापि "पापच्यते" इति प्रयोगादिदानीन्तनत्वगर्भं पौनःपुन्यत्वं न सम्यक् किन्तु प्रकृत क्रियासजातीयक्रियोत्तरत्वविशिष्टक्रियाध्वंसकालीनत्वरूपमेव तद्वाच्यम्। न च वक्ष्यमाणस्थूलकालमादाय तदुपपादनीयमितिवाच्यं गौरवादिति ध्येयम्। यङो विशिष्टार्थवाचकत्वाभावे युक्तिमाहाख्यातस्येत्यादि। "पापच्यते" इत्यदावाख्याते लट्त्वस्याख्यातत्वस्य च सत्त्वाल्लट्त्वेन वर्त्तमानत्वस्याख्यातत्वेन च कृतेरुपस्थितेराह चरमदलवाचकत्वादिति। विशेष्यदललभ्यवर्त्तमानादिकृतिवाचकत्वादित्यर्थः। यच्च विशेष्यदले विषयत्वं तत्तु संसर्गमर्य्यादालभ्यमिति बोध्यम्। ननु तृतीयादिपाकदशामेव "पापच्यते" इति प्रयोगात्तत्काले च प्रथमपाकस्याभावात् प्रथमपाके प्रयोगाधिकरणीभूतकालवृत्तित्वरूपस्येदानीन्तनत्वस्याभावादसङ्गतिरित्याशङ्कां निराचिकीर्षुराह इदानीन्तनत्वञ्च स्थूलकालमादायेति। अत्र कालस्य स्थूलत्वमननुगतमेव ग्राह्यम्। तेन यत्र यावता कालेन कृतासु क्रियासु पौनःपुन्यमनुभवसिद्धं तत्र तावानेव कालः स्थूलत्वेनोपादेयः फलबलादिति नानुपपत्तिः।

इदमत्रावधातव्यम्—सर्व्वत्र पौनःपुन्यमात्रं न यङर्थः किन्तु "गत्यर्थात् कौटिल्य एव" "लुप्यादेर्गर्ह्यात्" इत्याद्यनुशासनात् "जंगम्यते" इत्यादौ कौटिल्यं "लोलुप्यते" इत्यादौ च गर्हितत्वमपि। तदपि पौनःपुन्यमिव मूलधात्वर्थ एवान्वेति। तथाच "जंगम्यते" इत्यत्रेदानीन्तनगत्युत्तरत्व विशिष्टगतिध्वंसकालीनकुटिलगतिमानित्यन्वयबोधः। एवमन्यत्राप्यूह्यम्।........."शुभिरुचिभ्यां न स्यात्" इतिनिषेधात् पुनः पुनः शोभत इत्याद्यर्थे "शोशुभ्यते" इत्यादि र्न प्रयोगः। यत्र

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चौदनं पक्वा द्विदलपाकानन्तरं व्यञ्जनं पचति तत्रौदनं द्विदलं व्यञ्जनम्वा पापच्यत इति तु न प्रयोगो व्युत्पत्तिवैचित्र्याद् यङन्तधातूपस्थाप्यार्थे तत्तदोदनादिकर्म्मकत्वाद्यन्वयनियमात्। अतएव यत्र तुषेण पक्त्वा कारीषेण पाकोत्तरं काष्ठेन पचति तत्र तुषेण कारीषेण काष्ठेण वा पापच्यते इत्यपि न प्रयोग इत्यादिकं बहुतरमूहनीयम् ॥ ६३ ॥

## ॥ तर्कामृतम् ॥

पूर्व्वकालीनत्वं कर्त्ता च क्त्वार्थः। पूर्व्वत्वञ्च सन्निहितक्रियापेक्षया बोध्यम्। तत् पूर्व्वकालीनत्वं तत्प्रागभावकालवृत्तित्वं तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वम्वा। तेन "भुक्त्वा व्रजति" इत्यत्र गमनप्रागभावावच्छिन्नकालवृत्तिभोजनकर्त्तृभिन्नो व्रजतीत्यर्थः। समानविभक्तिकृतामभेदेन धर्म्मिवाचकत्वात्। अव्ययत्वेन क्त्वापरविभक्तिलोपात्। कालस्तात्पर्य्यवशाद्व्यवहिताव्यवहितसाधारणो बोद्धव्यः। तेन "पूर्व्वस्मिन्नब्दे समागतः" इत्येतादृशप्रयोगसङ्गतिः ॥ ६४ ॥

## ॥ विवृतिः ॥

अथ कृत्प्रत्ययानामर्थान्निरूपयितुं प्रथमतो बहुलप्रयुक्तत्वात् क्त्वाप्रत्ययस्यार्थं निरूपयति पूर्व्वकालीनत्वमिति। तेन यत्र स्वकीयभोजनात् प्राग्गमनं वृत्तं तत्र "भुक्त्वा गच्छति" इति न प्रयोगः। तच्च क्त्वाप्रकृतिभूतधात्वर्थेऽन्वेति। असमानकर्त्तृकक्रियायां सन्निहितक्रियापूर्व्वकालीनत्वसत्त्वेऽपि तत्र क्त्वा प्रत्ययो नेष्टः "समानकर्त्तृकयोः पूर्व्वकाले" इत्यनुशासनादत आह कर्त्ता चेति। क्त्वा प्रकृतिभूतधात्वर्थकर्त्तेत्यर्थः। तस्य चाभेदेन सन्निहितक्रियाश्रये चैत्रादावन्वयो बोध्यव्यः। यत्र गमनोत्तरभोजने शयनाद्यसन्निहितक्रियापूर्व्वकालीनत्वमस्ति तत्र 'भुक्त्वा गच्छति' इति प्रयोगवारणार्थमाह सन्निहितक्रियेति। क्त्वान्तसमभिव्याहृतधातूपस्थाप्येत्यर्थः। अत्र सन्निहितक्रियायां क्त्वाप्रकृतिभूतधातूपस्थाप्यक्रियाव्यवहितोत्तरत्वमपि निवेश्यं तेन यत्र पचनान्तरं गमनशयनादिकं कृत्वाऽश्नाति तत्र पचनक्रियायां सन्निहिताशनक्रियापूर्व्वत्वसत्त्वेऽपि "पक्त्वाऽश्नाति" इति न प्रयोगः। पूर्व्वकालीनत्वपदार्थं विवृणोति तत्पूर्व्वकालीनत्वमिति। तत् प्रागभावकालेति। तत् प्रागभावावच्छिन्नकालेत्यर्थः। तत् प्रागभावस्य क्रियान्तरव्यवहितानि पूर्व्वकालेऽपि सत्त्वात् क्त्वाप्रत्ययप्रसङ्गात् कल्पान्तरमाह तदुत्पत्तोत्यादि। सन्निहितक्रियाया उत्पत्तिकालावच्छेदेन वर्त्तमानो यो ध्वंसस्तत्प्रतियोगि कालवृत्तित्वमित्यर्थः। न चैवं यत्र पचनानन्तरं क्रियान्तराणि कृत्वा गच्छति तत्र 'पक्त्वा गच्छति' इति प्रयोगः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्याद् गमनोत्पत्तिकालावच्छेदेन पचनावच्छेदककालध्वंसस्यसत्त्वादिति वाच्यं तदुत्पत्तिकालीनेत्यनेन तदुत्पत्तिकालोत्पत्तिकत्वस्य विवक्षितत्वात्। एवञ्च सन्निहितक्रियायां प्रागुक्तमव्यवहितोत्तरत्वं न निवेश्यं प्रयोजनविरहात्। क्त्वान्त-प्रयोगे शब्दबोधप्रकारमभिनीय दर्शयितुमाह तेनेति। पूर्व्वकालीनत्वस्य क्त्वार्थत्वे-नेत्यर्थः। न च "मुखं व्यादाय स्वपिति" इत्यत्रानुपपत्तिरोष्ठाधरविभागरूपस्य मुखव्यादानस्य स्वापोत्तरकालीनतया सन्निहितक्रियापूर्व्वकालीनत्वविरहादितिवाच्यं मुखव्यादानानन्तरजयत्किञ्चित्स्वापव्यक्तिपूर्व्वकालीनत्वमादाय तादृशप्रयोगस्योप-पादनीयत्वात्। गमनप्रागभावेत्यादि। इदमुपलक्षणं, द्वितीयकल्पाश्रयणे तु गमनोत्-पत्तिकालीनध्वंसप्रतियोगिकालवृत्तिभोजनकर्त्तृभिन्नो गमनानुकूलकृतिमानित्यन्वय-बोधो द्रष्टव्यः॥ ननु भोजनकर्त्तृभिन्नइत्यत्राभेदः कुतो लभ्यते? न च "नामार्थयो र्भेदान्वयोऽव्युत्पन्नः" इति व्युत्पत्तेरत्राभेदः संसर्गमर्य्यादालभ्य इति वाच्यं क्त्वान्तस्याव्ययत्वेऽपि स्वराद्यव्ययभिन्नत्वेन नामत्वविरहादत आह समानवि-भक्तिकृतामिति। समानविभक्तिककृदन्तानामित्यर्थः। तथाच "भुक्त्वा गच्छति चैत्रः" इत्यादौ चैत्रादिपदोत्तरसुप्सजातीयसुवन्तस्य तथाविधभोजनकर्त्तृभेदपर्य्यन्तार्थो-पस्थापकत्वान्नानुपपत्तिरिति भावः। धर्म्मिवाचकत्वादिति। धर्म्म्यन्वयनियमादि-त्यर्थः। तेन चैत्रादिपदेनैव धर्म्म्युपस्थापनात् पुनरत्र धर्म्मिवाचकत्वभुक्त्वेतिशब्दस्य प्रवेशे वैयर्थ्यमित्यपास्तम्। ननु "भुक्त्वा" इत्यत्र विभक्त्यदर्शनात् कथं समान-विभक्तिकत्वमित्यत आह अव्ययत्वेनेति। "क्त्वा-तोसुन्-कसुनः" इत्याद्यनुशासनेन क्त्वान्तस्याव्ययत्वसिद्धिरितिभावः। विभक्तिलोपादिति। "अव्ययाच्च" इत्याद्यनु-शासनादित्यर्थः। पूर्व्वकालीनत्वमित्यत्र कालस्य व्यवहितरूपत्वेऽव्यवहितरूपत्वेच व्यवहितकाले क्त्वा-प्रत्ययो न स्यात्। न चेष्टापत्तिः, उभयथैव क्त्वान्तप्रयोगस्य प्रामाणिकत्वादतो व्यवहिताव्यवहितसाधारणकालनिवेशावश्यकत्वं ज्ञापयितुमाह काल इत्यादि। वक्तुरिच्छावशादित्यर्थः। तेनानियमशङ्का प्रत्युक्ता। व्यवहितकाले क्त्वान्तप्रामाणिकप्रयोगमुदाहरति पूर्व्वस्मिति। यद्यपि कालस्यैकत्वेऽपि क्षणदण्डाद्यु-पाधिभेदसत्त्वादुक्तप्रयोगेऽब्दत्वेनाव्यवहितत्वं वक्तुं युज्यते तथापि "पूर्व्वस्मिन्नब्दे गत्वा तत् पञ्चमेऽब्दे समागतः" इत्यादिप्रामाणिकप्रयोगानुरोधाद्व्यवहितकालोऽपि प्रवेश्य इति ध्येयम्॥ ६४॥

॥ तर्कामृतम् ॥

इच्छावान् तुमुलोऽर्थः। "भोक्तुं व्रजति" इत्यस्य भोजनेच्छावान् व्रजतीत्यर्थः। "भोक्तुमिच्छति" इत्यत्रतु कर्त्तरि लक्षणा। भोजनकर्त्तारमात्मानमिच्छतीत्यर्थः। "सविशेषणे हि" इति न्यायाद्विशेषणे कृताविच्छान्वयः॥ ६५॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ विवृतिः ॥

तुमुल्प्रत्ययार्थं निरूपयति इच्छावानिति। तस्य चाभेदेन सन्निहितक्रियाश्रये धर्म्मिण्यन्वयः। तुमुलन्तप्रयोगे शाब्दबोधप्रकारं दर्शयितुमाह भोक्तुमित्यादि। अत्रेच्छायां भोजनस्य कर्म्मत्वसम्बन्धेनान्वयो बोध्यः। नन्विच्छावतस्तुमुलार्थत्वे यत्र तुमुलन्तोत्तरमिच्छार्थकधातोः प्रयोगस्तत्रेच्छाद्वयभानादनुपपत्तिरित्याशङ्कां परिहर्त्तुमाह—भोक्तुमिच्छतीत्यादि। कर्त्तरीति। स्वप्रकृतिभूतधात्वर्थकर्त्तरीत्यर्थः। पर्य्यवसितशाब्दबोधमुपन्यस्यति भोजनकर्त्तारमिति। ननु भोजनकर्त्तुरात्मनः सिद्धत्वेनेच्छाविषयत्वबाधात् कथमिच्छाकर्म्मत्वं सङ्गच्छत इत्यत आह "सविशेषणे-हि" इति न्यायादिति। "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे" इति न्यायादित्यर्थः। तथा च तत्र तद्बाधेऽपि कर्त्तृनिष्ठविशेष्यता-निरूपितविशेषणताश्रये कृतौ तत् सत्त्वेन तदन्वय इत्याह विशेषणेकृताविंत्यादि ॥६५॥

॥ तर्कामृतम् ॥

प्रकृतधात्वर्थकर्त्ता शतृशानचोः, धात्वर्थजन्यफलवान् कर्म्मशानचोऽर्थः। शत्रादीनां कर्त्ता वाच्यः। सविषयकप्रकृतिकानामाश्रयत्वे लक्षणा। एवं कर्त्तृकर्म्मकृतां तेन तेन रूपेण कर्त्ता कर्म्म च वाच्यम्। भावकृतान्तु नङ्घञ्वादीनां प्रयोगसाधुत्वमात्रं धात्वर्थातिरिक्तस्य भावकृताऽनुपस्थापनात् ॥६६॥

॥ विवृतिः ॥

शतृशानचोरर्थं निरूपयति प्रकृतधात्वर्थकर्त्तेति; प्रकृतिभूतस्य धातोः प्रतिपाद्यो योऽर्थस्तत्कर्त्तेत्यर्थः। शतृशानचोरिति। यद्यप्युक्तप्रत्ययद्वयत्वावच्छेदेन धात्वर्थ-कर्त्तृत्वार्थकत्वं न सम्भवति कर्मशानचः क्रियाजन्यफलवदर्थकत्वादिति द्वयोः सहाभि-धानमसङ्गतं तथापि शतृप्रत्ययस्य कर्त्तरिवाच्य एव विहितत्वात्तत्सहचरितस्य शानचोऽपिकर्त्तरिविहितस्यैव तदर्थकत्वं बोध्यम्। अतएवाग्रे "कर्म्मशानचः" इति वक्ष्यति। कर्त्त शतृशानचोरिति वा पाठः। तथा च "पचन्तं चैत्रं पश्यति" इत्यत्रेव "पचमानं चैत्रं पश्यति" इत्यत्रापि वर्त्तमानपाकानुकूलकृतिमन्तं चैत्रं पश्यतीत्यन्वयबोधः। एतयोरतिदिष्टलट्त्वात् स्वातन्त्र्येण वर्त्तमानत्वबोधकत्वाद्वा वर्त्तमानत्वमप्यन्वयबोधे भासते। कर्त्तरि शानचोऽर्थमभिधाकर्म्मणि तस्यार्थमभिधत्ते धात्वर्थजन्येति। स्वप्रकृतिभूतधात्वर्थजन्येत्यर्थः। तथा च "पच्यमानमोदन-मीक्षते" इत्यत्र पचनजन्यफलशालिनमोदनमीक्षत इत्यन्वयबोधः। वस्तुतस्तु विक्लित्तिमन्तमोदनमीक्षत इत्येव तत्रान्वयबोधो जन्यान्तस्य परिचायकतयैवोपपत्तेः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

फलवत्येव तयोः शक्तिकल्पनस्य लाघवेन युक्तत्वात् ॥ ननु कर्त्तुः शत्रादिवाच्यत्वे "जानन्तं चैत्रमुपदिशति" इत्यादावन्वयबोधानुपपत्तिर्ज्ञानानुकूलत्वस्य कृतौ बाधितत्वेनज्ञानानुकूलकृतिमत्त्वरूपज्ञानकर्त्तृत्वाप्रतीतेरित्याशङ्कां लक्षणयापनेतुं भूमिकामाह शत्रादीनामिति। आदिना कर्त्तृ शानच् तृजादेःपरिग्रहः। पचादिधातूत्तरशतृप्रत्ययस्यार्थनिर्णये लक्षणाश्रयणस्याप्रयोजनकत्वादाह वाच्य इति। ईश्वरेच्छीयबोधजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रय इत्यर्थः। अतएवानुशासनमपि "कर्त्तरिकृत्" इत्यादिकम्। शतृप्रत्ययस्य यत्रलक्षकत्वं तादृशप्रयोगाभिप्रायेणाह सविषयार्थकप्रकृतिकानामिति। शत्रादीनामिति पूर्व्वेणान्वयः। ज्ञानाद्यर्थकधातूत्तरवर्त्तिनामिति तदर्थः। लक्षणेति। शक्यार्थस्य कर्त्तुर्व्वाधादितिभावः। तथाचोक्तस्थले "ज्ञानाश्रयं चैत्रमुपदिशति" इत्येवान्वयबोधः। कर्त्तृकर्म्मविहितकृत्प्रत्ययार्थविचारमुपसंहरति एवमिति। कर्त्तृकर्म्मकृतामिति। कर्त्तरि कर्म्मणि च वाच्ये विहितकृत्प्रत्ययानामित्यर्थः। तेन तेन रूपेणेत्यर्थः। कृतिमत्वेन फलत्वेन च रूपेणेत्यर्थः। भावविहितकृत्प्रत्ययानामर्थनिरूपयितुमाह भावकृतामिति। भाववाच्ये विहितकृत्प्रत्ययानामित्यर्थः। तेन "अकर्त्तरि कारके संज्ञायाम्" इत्यनेन "आहारः" इत्यादौ कर्म्मणि विहितघञा धात्वर्थमात्रस्यानुपस्थापनेऽपि न क्षतिः। नङ् घञादीनामित्यादिना "नपुंसके भावे क्तः" इत्यादिनानुशिष्टस्य क्तादेरुपग्रहः। शत्रादिवद्भावविहितानामतिरिक्तार्थकत्वासम्भवादाह प्रयोगसाधुत्वमात्रमिति। आकाङ्क्षाविशेषसम्पादकतयेत्यादिः, प्रयोजनमिति शेषः। "भावे घञ्" इतिसूत्रस्थभावपदस्य समभिव्याहृतधात्वर्थवृत्त्यसाधारणधर्म्मपरत्वादाह धात्वर्थातिरिक्तस्येति। अनुपस्थापनादिति। उपस्थापयितुमशक्तत्वादिति तदर्थः। तथाच भावकृता धात्वर्थमात्रमुपस्थाप्यत इतिभावः। एवञ्च "पाकं पश्य" इत्यादौ घञाद्युपस्थाप्यस्य पचनादेर्द्वितीयाद्यर्थकर्म्मत्वादावन्वयोपपत्तिः, अन्यथा सुवर्थे प्रकारतया धात्वर्थान्वयस्याव्युत्पन्नत्वात् पचनकर्म्मताकदर्शनान्वयबोधस्तत्र न स्यात्। अतएव च "स्तोकः पाकः" इत्यादि प्रयोगोऽपि प्रमाणम्। अन्यथा पचनादेर्धातूपस्थाप्यत्वे तद्विशेषणीभूतस्तोकादिवाचकस्तोकादिपदात् "क्रियाविशेषणानामकत्वं कर्म्मत्वं नपुंसकत्वञ्च "इत्यनुशासनाद्द्वितीयापत्तेः। वस्तुतस्तु घञर्थविशेषणत्व तात्पर्य्येण "स्तोकः पाकः" इतीव धात्वर्थविशेषणत्वतात्पर्य्येण "स्तोकं पाकः" इत्यपि प्रमाणमितिध्येयम्। न चैवं भावकृत्प्रयोगे कृतेव धातुनापि स्वार्थोपस्थापने बाधकाभावाद्धात्वर्थद्वयभानापत्तिरिति वाच्यं भावकृत् समभिव्याहारस्य धातुना स्वार्थोपस्थापने बाधकत्वकल्पनात्। न च वैपरीत्ये किं विनिगमकमिति वाच्यं "पाकं पश्य" इत्यादावन्वयबोधानुपपत्तेरेव विनिगम-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कत्वात्। न चैवं प्रयोगसाधुत्वमात्रमित्युक्तं न सङ्गच्छते प्रोक्तान्वयबोधोपपत्तेरेव भावकृतां धात्वर्थोपस्थापकत्वप्रयोजनत्वसम्भवादिति वाच्यं तत्र मात्रार्थस्याविवक्षितत्वात् ॥ ६६ ॥

## ॥ तर्कामृतम् ॥

ननु "नीलं घटमानय" इत्यादौ द्वितीयाद्वयश्रवणात्कर्म्मद्वयबोधापत्तिः, न तु विशिष्टस्य कर्म्मत्वमिति चेन्न अत्र विशेषणविभक्तिः साधुत्वाय। अथवा विशेषण विभक्तेरभेदोऽर्थः। अत्रायं विशेषः—द्वितीयपक्षे वाक्यसमासयोः पर्य्यायता न घटते वाक्ये "नीलं घटं" इत्यादावभेदस्य पदार्थत्वेन प्रकारत्वान्न संसर्गत्वम्। "नीलघटम्" इत्यादौ कर्म्मधारये लक्षणाया अस्वीकारेणाभेदस्यापदार्थत्वेन संसर्गत्वात्। तथाच वाक्यसमासयोः पर्य्यायानुरोधेन षष्ठीसमासे "राजपुरुषः" इत्यादौ षष्ठ्यर्थसम्बन्धे लक्षणा न घटते सम्बन्धस्य संसर्गमर्य्यादालभ्यत्वात्। वस्तुतस्तु विरुद्धविभक्त्यनवरुद्धस्याभेदबोधकत्वव्युत्पत्तेर्म्मुख्यार्थराजाभेदस्य बाधेन राजपदस्य राजसम्बन्धिनि लक्षणा। एवं बहुव्रीहौ चरमपदस्यान्यपदार्थे लक्षणा। तथाच द्वन्द्वकर्म्मधारयान्यसमासे सर्व्वत्र तत्तदर्थे लक्षणा ॥ ६७ ॥

## ॥ विवृतिः ॥

ननु "कर्म्मणि द्वितीया" इत्यनुशासनात् "नीलं घटमानय' इत्यत्र घटपदोत्तर द्वितीययेव नीलपदोत्तरद्वितीययापि कर्म्मत्वबोधने बाधकाभावाद् द्विधाकर्म्मत्वभानं स्यादित्याशङ्कते ननु नीलमित्यादि। कर्म्मद्वयेति। कर्म्मत्वद्वयेत्यर्थः। तेन कर्म्मणो धात्वर्थे साक्षात् सम्बन्धेनान्वयायोग्यत्वेऽपि न क्षतिः। न चासावापत्तिरिष्टेति वाच्यं कर्म्मत्वस्य गुरुतया द्विधा तत् प्रवेशेऽन्वयितावच्छेदक गौरवापत्तेः। कर्म्मद्वयव्यवच्छेद्यं दर्शयति नन्वित्यादि। विशिष्टस्येति। नीलाभिन्नघटस्येत्यर्थः॥ आशङ्कां निरस्यति नेति। निरसन प्रकारमाह अत्रेति। साधुत्वायेति। आकाङ्क्षाविशेषसम्पादकतया पदसाधुत्वार्थिकेत्यर्थः। तथाच विशेषणविभक्ते निरर्थकत्वासम्भवान्नद्विधाकर्म्मत्व बोधप्रसङ्ग इति भावः। नन्वन्यत्रेवात्रापि द्वितीयायाः सार्थकत्वं युक्तं निरर्थकत्वकल्पने बीजाभावादत आह अथवेति। अभेद इति तथाच विशिष्टस्यैव कर्म्मत्वान्नानुपपत्तिरिति भावः। सोऽयमभेदो भेदत्वावच्छिन्नाभावो भेदनिष्ठप्रतियोगिताकाभावोऽन्यादृशोवेत्यन्यदेतत् ॥ विशेषणविभक्तेर्न्निरर्थकत्वे वाक्यसमासयोः पर्य्यायत्वं सम्भवत्युभयत्रैवाभेदस्य संसर्गमर्य्यादया लभ्यत्वात्, अभेदार्थकत्वे तु नैवमितीममर्थं सयुक्तिकं प्रदर्शयितुमाह अत्रायं विशेष इति।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विशेषणविभक्ते र्निरर्थकत्वपक्ष इत्यर्थः। वाक्यसमासयोरिति। समासोपयोगिविग्रह-वाक्य-समस्यमानसमस्तपदयोरित्यर्थः। पर्य्यायितेति। विभिन्नानुपूर्व्वीकत्वे सति समानार्थप्रतिपादकतेत्यर्थः। न घटत इति। कुत इत्याकाङ्क्षानिवृत्तये आह वाक्ये इत्यादि। वाक्येऽभेदस्य संसर्गत्वे वाधकयुक्तिं दर्शयत्यभेदस्य पदार्थत्वेनेति। अमृपदोपस्थाप्यार्थत्वे नेत्यर्थः। प्रकारत्वादिति। तथाचाभेदस्य प्रकारतया भानं प्रति विशेष्यवाचकपदोत्तरविभक्तिसमानविशेषणवाचकपदोत्तरविभाक्त्युपस्थाप्यत्वं तन्त्रमितिभावः। न संसर्गत्वमिति। न चैवं "अभेदश्च प्रातिपदिकार्थे स्वसमान-विभक्तिकेन स्वाव्यवहितपूर्व्ववर्त्तिना च पदेनोपस्थापितस्यैव संसर्गमर्य्यादया भासते। यथा 'नीलो घटः' 'नीलं घटमानय' इत्यादौ घटादौ नीलादेः" भट्टाचार्य्यवचनविरोध इतिवाच्यं सिद्धान्ते "अभेदस्य संसर्गमर्य्यादियाभानन्तु समासस्थल एव, तत्र लुप्तविभक्त्यनुसन्धानं विनापि शाव्दबुद्धे रानुभाविकत्वात्" इत्यनेन सन्दर्भेन भट्टाचार्य्यैरपि वाक्येऽभेदस्य प्रकारतया भानस्य स्वीकृतत्वात्। विशेष्यपदार्थे विशेषणपदार्थान्वियप्रयोजकस्य प्रकारतया भानासम्भव एव संसर्गमर्य्यादिया भान-स्याम्युपेतव्यत्वादिति भावः। नचैतन्नियमो निष्प्रमाणक इति वाच्यं शाव्दवोधे प्रकारतया भानं प्रति वृत्तिज्ञानजन्योपस्थितिविषयत्वस्य प्रयोजकत्वात, आकाङ्क्षा भास्ये च संसर्गे तद्वाधात्। यद्यप्यन्विताभिधानवादिभिर्मीमांसकगुरुभिः संसर्गेऽपि शक्तेः स्वीकारादभेदादेः संसर्गमर्य्यादियाभानमनादेयमेव तथाव्यवश्यक्लृप्ताकाङ्क्षा-भास्यत्वेनैवोपपत्तौ संसर्गे शक्तिकल्पने गौरवेण नैयागिकै स्तेषां मतस्य दूषितत्वान्नानु-पपत्तिरिति ध्येयम्॥ वाक्येऽभेदस्य संसर्गत्वाभावमुपपाद्य समासे तस्य संसर्गत्व-मुपपादयितुमाह नीलघटमित्यादाविति। ननु "नीलघटम्" इत्यादौ नीलपदस्य नीलाभेदत्वावच्छिन्ने लक्षणयैव शाव्दबुद्धे रुपपत्तोरभेदस्य संसर्गत्वस्वीकारोऽनति-प्रयोजनक इत्याशङ्कामपनेतुमाह लक्षणाया अस्वीकारेणेति। शक्त्यैव चरितार्थत्वे लक्षणाश्रयणस्यान्याय्यत्वादिति भावः। अतएव "निषादस्थपतिं याजयेत्" इत्यत्र लक्षणापत्तो र्न तत्पुरुषः किन्तु कर्म्मधारय एव लक्षणाभावादित्युक्तम्। वस्तुत-स्त्विदमुपलक्षणं, लुप्तविभक्त्यनुसन्धानं विनाप्यन्वयबुद्धे रानुभविकत्वेनेत्यपि वोध्यम्॥ ननु वाक्यसमासयोः पर्य्यायतार्थं मणिकृता "राजपुरुष इत्यादौ पूर्व्वपदे षष्ठ्यर्थसम्वन्धे लक्षणा" इत्युक्तं न सङ्गच्छते "नीलं घटम्" "नीलघटम्" इत्यादावुक्तरीत्या वाक्यसमासयोरपर्य्यायित्वस्य दृष्टत्वादित्याह तथाचेति। उक्तकर्म्मधारये वाक्यसमासयोरपर्य्यायित्वे चेत्यर्थः। पर्य्यायानुरोधेनेति। यथा "राज्ञः पुरुषः" इति वाक्ये षष्ठ्यर्थः सम्वन्धः पुरुषे प्रकारविधयान्वेति तथा "राजपुरुषः" इति समासेऽपि राजपदलक्षितस्य राजसम्वन्धस्य पुरुषे प्रकार

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विधयान्वयसम्भवात् पर्य्यायिता सम्भवतीति भावः। किन्तूक्तकर्म्मधारयतद्वाक्ययो र्यथाऽपर्य्यायिता तथात्राप्यपर्य्यायिता स्यात् किं लक्षणाश्रयेणेत्याह लक्षणा न घटत इति। तथाच विग्रहवाक्यानां समासपर्य्यायत्वरक्षणार्थमेव समासे लक्षणा स्वीक्रियत इति सिद्धान्तव्याकोप इति भावः। कुत इत्याकाङ्क्षायामाह सम्बन्धस्य संसर्गमर्य्यादा लभ्यत्वादिति। सम्बन्धस्याकाङ्क्षाभास्यत्वादित्यर्थः। संसर्गमर्य्यादया भासमानस्य प्रकारविधयान्वया योग्यत्वादिति भावः।

नन्वेवं "राजपुरुषः" इति तत्पुरुषे राजपदलक्षितार्थस्य पुरषपदार्थे तादात्म्यातिरिक्त सम्बन्धे नान्वयात् "नामार्थयो भेदेनान्वयोऽव्युत्पन्नः" इति सिद्धान्तविरोध इत्यत आह वस्तुतस्त्विति। विरुद्धविभक्त्यनवरुद्धस्येति। धर्म्मिवाचकपदोत्तरविभक्तिरहितस्येत्यर्थः। पूर्व्वपदस्येति शेषः। "नीलमुत्पलम्" इत्यादावभेदबोधकत्वहान्यापत्तेर्विरुद्धेति विभक्तिविशेषणम्। अभेदावोधकत्व व्युत्पत्तेरिति। तथाच "राजपुरुषः" इत्यत्र राजपदस्य विरुद्धविभक्त्यनवरुद्धत्वेनाभेदबोधकत्वाद्राजाभेदस्य च पुरुषे वाधाल्लक्षणावश्यमभ्युपेयेति भावः। मुख्यार्थान्वियवाधस्यैव सर्व्वत्र लक्षणावीजत्वादुक्तं मुख्यार्थेति। राजसम्बन्धिनि लक्षणेति। तथाच सम्बन्धिनस्तादात्म्येन धर्म्मिण्यन्वय सम्भवान्नोक्त सिद्धान्तव्याधात इति भावः।

नचैवं समासे राजपदस्य राजसम्बन्धिनि लक्षणास्वीकारे समासविग्रहयोः पर्य्यायित्वहान्यापत्ति र्व्वाक्ये षष्ठ्या सम्बन्धिनोऽनुपस्थापनात् "शेषेषष्ठी" इति सूत्रेण स्वस्वामिभावादिसम्बन्ध एव षष्ठीविधानान्नतु सम्बन्धिनीति वाच्यं विशेषण विभक्तेरभेदार्थकत्वपक्षे कर्म्मधारये वाक्यसमासयोरपर्य्यायित्वस्येव तत्पुरुषेऽपि वाक्यसमासयोरपर्य्यायित्वस्येष्टत्वात्। अतएव "राजपदादौ राजसम्बन्धिनि लक्षणा, तस्य च पुरुषेण सहाभेदान्वयः" इति सिद्धान्तमुक्तावलीकृतः। नचैवं "राजपुरुष इत्यादिकस्तु तत्पुरुषो न पूर्व्वपदलक्षितराजसम्वधिनस्तादात्म्येनान्वयवोधकः समासविग्रहयोस्तुल्यार्थकत्वहान्यापत्तेः" इति 'शब्दशक्तिप्रकाशिका' सन्दर्भविरोध इति वाच्यं निपातस्थल इव तत्पुरुषेऽपि नामार्थयोर्भेदान्वयमुपगम्यैव तदुक्तत्वात्। अतएव "यथाच नामार्थयोर्भेदेनान्वयेऽपि न क्षति स्तथोपरिष्टाद्वक्ष्यते" इति तत्रैवोक्तम्।

नामार्थयोरभेदान्वयोपपत्तये यथा तत्पुरुषे लक्षणाऽभ्युपेतव्या तथा बहुव्रीहावपीति सूचयितुमुक्तमेवमिति। बहुव्रीहौ लक्षणया आवश्यकत्वेऽपि "चित्रगुरस्ति" इत्यादौ चित्रग्विति समुदयस्य लक्षणा न सम्भवति वाक्यत्वेन लक्षकत्वायोगात्। नापि केवल चित्रपदस्य, तस्य प्रथमान्तत्वाभावेन तदर्थेऽस्तित्वान्वयायोगात् प्रथमान्तपदोपस्थाप्यस्यैवार्थस्य भावनाविशेष्यत्वनियमादत उक्तं चरमपदस्येति। अन्यपदार्थ

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति। चरमपदार्थ सम्वन्धिनीत्यर्थः। तथा चैकदेशान्वयस्वीकारे चोक्तस्थले गोपदस्य गोस्वामिनि लक्षणा, गवि चित्रपदार्थस्याभेदान्वयः। एकदेशान्वयानभ्युपगमेतु गोपदस्यैव चित्रगोस्वामिनि लक्षणा, चित्रपदं तादृशर्थे तात्पर्य्यग्राहकमिति संक्षेपः।

कर्म्मधारय तत्पुरुषाव्ययीभावबहुव्रीहिद्वन्द्वानां मध्ये बहुव्रीहितत्पुरुषयोर्ल्लक्षणाया आवश्यकत्वस्य प्रतिपादितत्वात् "उपकुम्भम्" इत्यादावपि कुम्भसम्वन्ध्यभिन्नं समीपमित्याद्यन्वयबोधोदयात् कुम्भादिपरपदस्य कुम्भादिसम्बन्धिनि लक्षणाया अभ्युपेतव्यत्वात् फलितार्थमुपसंहरति तथाचेति। "धवखदिरौ छिन्धि" "पाणिपादं वादय" इत्यादि द्वन्द्वे "नोलोत्पलम्" इत्यादि कर्म्मधारये च लक्षणां विनैव धवखदिरकर्म्मताकच्छेदन विषयकस्य, करचरणकर्म्मताकादनविषयकस्य, नोलाभिन्नोत्पलविषयकस्य चान्वयबोधस्योत्पत्तेराह द्वन्द्व कर्म्मधारयान्यसमास इति। नचेतरेतर द्वन्द्वे "धवखदिरौ" इत्यादावन्वयबोधे साहित्यभानार्थं खदिरादिपदस्य धवखदिरादिसाहित्ये लक्षणाश्रयनीयेतिवाच्यं तत्र साहित्यस्याननुभवात् साहित्यशून्ययोरपि घटत्वपटत्वाद्योर्बोधे "घटत्वपटत्वे" इत्यादि द्वन्द्वदर्शनात् साहित्यस्य दुर्न्निर्व्वचत्वाच्च। नापि समाहारद्वन्द्वे "पाणिपादम्" इत्यादौ पादाद्युत्तरपदस्य पाणिपादादिसमाहारे लक्षणा, समाहारस्याननु भवाद्दुर्व्वचत्वाद्‌गौरवाच्च। तथापि तस्य समाहारसंज्ञया व्यपदेशस्तु "द्वन्द्वैकत्वम्" इत्यादिनानुशिष्टैकवचनसाधुत्वायेतिबोध्यम्। वस्तुतस्तु समस्यमानपदार्थतत्तावच्छेदकभेद एव "चार्थेद्वन्द्वः" इति सुत्रेण द्वन्द्वविधानात्तत्राभेदान्वयोपपत्तये लक्षणा कल्पनप्रयासः प्रयास एव। अत्र कर्म्मधारयपदं द्विगोरप्युपलक्षकं तत्रपि विनालक्षणामभेदेनान्वयबोधस्यानुभविकत्वात् तथाहि "पाञ्चपुरुषिः" "पञ्चगवधनः" "पञ्चपुली" इत्येतेषु तद्धितार्थोत्तरपदसमाहार द्विगुषु पञ्चानां पुरुषाणामपत्यं, पञ्चगावोधनमस्य, पञ्चानां पुलानां समाहार इत्येभिः व्यक्यैः पुरुषादि पदार्थे पञ्चपदार्था भेदान्वयः सूपपन्नः। एवमन्यत्रापि। तत्तदर्थे इति। यत्र समासे यत् पदार्थे यत् पदस्य लक्षणा युक्ता तत् समासे तत् पादार्थे तत् पदस्य लक्षणेत्यर्थः। इत्थञ्च वैयाकरणानां समासे शक्तिकल्पनं न साधीयः, पदशक्त्यैव निर्व्वाहाद् गौरवाच्च ॥ ६७ ॥

॥ तर्कामृतम् ॥

एवं नञोऽर्थोऽभावः। "अघटं भूतलम्" इत्यादौ घटभिन्ने लक्षणा। "न कलञ्जं भक्षयेत्" इत्यादौ वलवदनिष्टजनकत्वे लक्षणा ॥ ६८ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## ॥ विवृतिः ॥

संक्षेपतः समासविचारं समाप्य प्रसङ्गतो नञर्थं निरुपयितुमाह एवमिति। नञर्थ इति। नञो मुख्यार्थ इत्यर्थः। अभाव इति। अत्यन्ताभाव इत्यर्थः। नन्वेवं 'अघटं भूतलम्' इत्यादावत्यन्ताभावाप्रतीतेरव्याप्तिरित्याशङ्कां परिजिहीर्षुराह अघटमित्यादि। अत्राकारान्ताव्ययीभावसमासतयामन्तता बोध्या। इत्यादावित्यादिना 'अपङ्कजं सरः' इत्यादेः परिग्रहः। अव्ययीभावसमासस्याव्ययत्वेऽपि निपातत्वाभावेन भेदान्वयबोधकत्वासम्भवादभेदान्वयोपपत्तये पूर्व्वपदलक्षणावश्यकीत्याह घटभिन्ने इति। तथाच तत्र घटभिन्नं भूतलमित्यन्वयबोधः सम्पन्न इति भावः। एवञ्च तत्र भेदेऽपि शक्तिकल्पने भेदत्वस्य गुरुतया शक्यतवच्छेदकगौरवापत्तेराह लक्षणेति। नञ्पदस्य लक्षणेत्यर्थः। तथाच घटपदस्य तात्पर्य्यग्राहकत्वमात्रमिति भावः। न च तत्र घटपदस्य घटभिन्ने लक्षणा नञस्तात्पर्य्यग्राहकत्वं कुतो न स्यादिति वाच्यं तथाविधलक्षणायाःअनभ्युपगमात्। इत्थञ्च 'भूतले घटो नास्ति' इत्यादावेव नञो मुख्यार्थतेति तात्पर्य्यम्।

अथ विधिप्रत्ययसमभिव्याहृतनञः प्रयोगे समाधानप्रकारमाह न कलञ्जमित्यादि। इत्यादावित्यादिना 'परदारान्न गच्छेत्' इत्यादेरुपग्रहः। लक्षणेति। नञ्पदस्य लक्षणेत्यर्थः। एवञ्च तत्र कलञ्जभक्षणमनिष्टजनकमित्यन्वयबोध इति भावः। नच तत्र नजात्यन्ताभावस्य विधिलिङा च वलवदनिष्टाननुवन्धीष्टसाधनताया बोधनात् कलञ्जभक्षणं वलवदनिष्टाननुबन्धीष्टसाधनत्वाभाववदित्यन्वयबोधः स्यात् किं लक्षणयेति वाच्यं प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थवोधकत्व व्युत्पत्तिभङ्गप्रसङ्गाद्विध्यर्थे धात्वर्थस्यानन्वयात्। अतएव तत्र विनैव लक्षणां कलञ्जभक्षणाभावोवलवदनिष्टाननुवन्धीष्टसाधनमित्यपि नान्वययबोधो विधिप्रत्ययसमभिव्याहृत नञ् प्रयोगे नञर्थमुख्यविशेष्यकान्वयबोधस्यव्युत्पन्नत्वाच्च। एवञ्च तत्र विधिलिङस्तात्पर्य्यग्राहकत्वमात्रमिति वोध्यम्।

एतच्च नञोऽत्यन्ताभावमुख्यार्थकत्वं मणिकृतां मतेनैव समर्थनीयम्। तैरेव 'न पचति' 'भूतले न घटः' इत्यादौ नञो मुख्यार्थत्वमित्युक्तत्वात्। वस्तुतस्तु संसर्गाभावोऽन्योन्याभवश्च नञ्पदशक्यः। शक्यतावच्छेदकञ्च लाघवादखण्डोपाधिरूपमभावत्वमन्योन्याभावत्वञ्च। तत्राभावत्वं ध्वंसादित्रितयसाधारणम्। 'भूतले न घटः' इत्यत्रात्यन्ताभावस्य, 'श्यामघटे रक्तं रूपं नास्ति' इत्यत्र रक्तरूपप्रागभावस्य, 'रक्तघटे श्यामरूपं नास्ति' इत्यत्र श्यामरूप ध्वंसस्य, 'घटो न पटः' इत्यत्रान्योन्याभावस्य नञा प्रत्यायनात्। एवं 'न कलञ्जं भक्षयेत्' इत्यत्रापि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कलञ्जभक्षणं' बलवदनिष्टाजनकत्वाभाववदित्येवान्वयबोधो विधिना बलवदनिष्टाजनकताया नञा चात्यन्ताभावस्योपस्थापनात्। न च धात्वर्थान्वितविध्यर्थाबोधात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्गप्रसङ्ग इति शङ्कयं विधिप्रत्ययसमभिव्याहृते नञ्पदे तादृशव्युत्पत्तिवैचित्र्योपगमात्। इत्थञ्च 'तृप्तिकामो जलं न ताड़येत्' इत्यादाविष्टसाधनत्वाद्यभावान्वयबोधोऽनुभवसिद्ध उपपद्यते। तथाच 'घटो न पटः' इत्याद्यनुरोधेनान्योन्याभावत्वे नञ्पदप्रवृत्तिनिमित्तत्वस्यावश्यमभ्युपेयत्वात्तत एव 'अघटं भूतलम्' इत्यादावप्युपपत्तेस्तत्र लक्षणाश्रयणमप्रयोजनकमित्यवधेयम् ॥

यत्तु "अनिक्षुः शरः" इत्यादौ सादृश्यस्य "अघटः पटः" इत्यादावन्यत्वस्य "अनुदराकन्या" इत्यादौ स्वल्पतायाः "अब्राह्मणो वार्द्धुषिकः" इत्यादावप्राशस्त्यस्य "असुरोदैत्यः" इत्यादौ विरोधिनो नञाबोधनात् सादृश्यादीनामपि नञ् पदवाच्यत्वं सिध्यति। तदुक्तं "तत् सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः" इति वैयाकरणमतं तन्न साधीय स्तत्तदर्थस्य शक्यत्वे गुरुतरबहुतर शक्यतावच्छेदककल्पनगौरवप्रसङ्गात्। नञो लक्षणयैव तत्तत्प्रयोगस्योपपादनीयत्वात्।

स च नञ् प्रसज्य प्रतिषेधतया पर्य्युदासतया च परिभाष्यते। यथा "अभुक्ता भवता नाथ! मुहूर्त्तमपि सा पुरा" इत्यादौ स्वार्थस्य निषेधस्य विधेयत्वान्नञः प्रसज्यपतिषेधार्थत्वम्। तदुक्तं "अप्राधान्यं विधेर्यत्र निषेधे च प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्" इति। "जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः "इत्यादौ च स्वार्थस्य निषेधस्य विधेयतयानवगमादत्रस्तत्वादिकमनूद्यात्मगोपनाद्येव विधेयमतो नञः पर्य्युदासता। तदुक्तं—"प्राधान्यञ्चविधेर्यत्र चाप्रधानता। पर्य्युदासः सविज्ञेयो यत्रोत्तरपदेन नञ्" इति। एवञ्च "ज्वरितो नान्नमश्नीयात्" "अष्टम्यां मांसं नाश्नीयात्" "पर्व्वणि दारान्न गच्छेत्" इत्यादौ नञः प्रसज्यप्रतिषेधार्थत्वमन्नाशनाभावादेरेव विधेयतया प्राधान्यात्। "रात्रौ श्राद्धं न कुर्व्वीत" "नोद्वहेद्रोगिनीं कन्याम्" "नोपेयादनृतौ भार्य्याम्" इत्यादौ च नञः पर्य्युदासत्वं, प्रथमे "अमायां पितृभ्यो दद्यात्" इत्यनेन, द्वितीये "अरोगिनीं भ्रातृमतीमुद्वहेदविशङ्कितः "इत्यनेन, तृतीये "ऋतुकालाभिगामी स्यात्" इत्यनेन च वाक्येनैकवाक्यतया रात्रीतरामावस्याधिकरणकश्राद्धकरणस्य, रोगिनीतरभ्रातृमतीविवाहस्य, अनृत्ववच्छेदकेतरकालाधिकरणकभार्य्यागमनस्य विधेयत्वेन प्राधान्यात्। तचोक्तप्रयोगेषु रात्र्यधिकरणकश्राद्धाभाव-रोगिणीकन्योद्वाहाभाव-ऋत्वनवच्छेदककालावच्छिन्नभार्य्यागमनाभावानामेव विधेयत्वमतएव प्रधान्यञ्चास्त्विति वाच्यं "अर्थैक्यादेकं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाक्यं साकाक्षंञ्चेद्विभागे स्यात्" इत्यनेन जैमिनिना सम्भवत्येकवाक्यत्वे वाक्यभेद कल्पनाया अनादेयत्वस्याभिहितत्वात्। अत्र च दर्शितवाक्यैरेकवाक्यत्वस्य सम्भवे-नोक्ताभावानां विधेयत्वासम्भवात्। अन्यथा वाक्यभेदाद् गौरवापत्तेः ॥ ६९ ॥

## ॥ तर्कामृतम् ॥

क्रियासङ्गतस्य एवकारस्यात्यन्तायोगव्यवच्छेदोऽर्थः। यथा "नीलं सरोजं भवत्येव"। विशेषणसङ्गतस्यायोगव्यवच्छेदः। यथा "शङ्खः पाण्डुर एव"। विशेष्यसङ्गतस्यान्ययोगव्यवच्छेदः। यथा "पार्थ एव धनुर्द्धरः" इत्यादौ। एवं दिशा सर्व्वत्र बोध्यम् ॥ ६९ ॥

॥ * ॥ इति श्रीमन्महामहोपाध्याय जगदीश तर्कालङ्कार
विरचितं तर्कामृतं समाप्तम् ॥ * ॥

## ॥ विवृतिः ॥

नञ् निपातस्यार्थं निरूप्य एवकाररूपनिपातान्तरस्य त्रिविधस्यार्थं क्रमेण निरूपयितुमाह क्रिया सङ्गतस्येत्यादि। क्रियासङ्गतस्येत्यस्य क्रियाबोधकशब्द समभिव्याहृतस्येत्यर्थः। तेन "रूपवान् घटो भवत्येव" "सविषयकं ज्ञानं भवत्येव" इत्यादौ तिङन्ता व्यवहितोत्तरर्वात्तिनोऽप्येवकारस्य तिङन्त समभिव्याहृतत्वाभावान्नात्यन्तायोग व्यवच्छेदार्थकत्वम्; नचोक्तस्थलद्वये एवकारस्य तिङन्तेन सहान्वयमुपगम्यात्यन्तायोग व्यवच्छेऽर्थकत्वं कुतो नोपेयत इति वाच्यं एवकारस्य क्रियार्थकशब्द-समभिव्याहारं प्रति विशेष्ये विशेषणायोगप्रसिद्धेरेव नियामकत्वोपगमात्। एवञ्चात्र रूपाभावे घटवृत्तित्वस्य, सविषयकत्वाभावे ज्ञानवृत्तित्वस्य चाप्रसिद्धत्वा-देवकारस्य न क्रियार्थकशब्दसमभिव्याहृतत्वमतएव च नात्यन्तायोगव्यवच्छेदार्थ-कत्वमपि, किन्तु विशेष्ये विशेषणायोगाप्रसिद्धेरेव विशेषणार्थक पद समभिव्याहारं प्रति नियामकतया रूपाभावस्य घटे, सविषयकत्वाभावस्य च ज्ञानेऽप्रसिद्धत्वेनायोग व्यवच्छेदार्थकपदसमभिव्याहृतत्वमपि।

अत्यन्तायोगव्यवच्छेद इति। विशेषण सङ्गतैवकारस्थलेऽति व्याप्तिवारणार्थ-मत्यन्तत्वमयोगपदार्थेऽभावे विशेषणम्। तदर्थश्च विशेष्यतावच्छेदकधर्म्मावच्छे-द्यत्वम्। एवञ्च विशेष्ये विशेषणस्य योऽत्यन्तमयोगः—विशेष्यतावच्छेदकधर्म्मा-वच्छेद्येन विशेषणाभावः, तदव्यवच्छेदः—तदभाव इत्यर्थः। "नीलं जलम्" इत्यादौ विशेषणभावे विशेष्यतावच्छेदकधर्म्मावच्छेद्यत्वमस्तीत्यन्तायोगः। अत्रतु नीलाभावस्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सरोजत्वावच्छेदेनासत्त्वात् तन्नास्तीत्यन्तायोगव्यवच्छेदः। तथाच विशेषणे विशेष्यतावच्छेदकव्यापकीभूताभावाप्रतियोगित्वमत्यन्तायोगव्यवच्छेद इति फलितार्थः। केचित्त्वत्यन्तत्वमयोगव्यवच्छेदस्य विशेषणमित्याहुः। तन्मन्दम्। अयोगव्यवच्छेदस्यायोगप्रतियोगिपर्य्यवसन्नस्यात्यन्तत्वविशेषणवैयर्थ्यात्तदत्यन्तत्वस्य दुर्न्निर्व्वचत्वाच्च। उदाहरति यथा—नीलमिति। तथाच सरोजत्वव्यापकीभूताभावाप्रतियोगिनीलत्ववत् सरोजमिति तत्रान्वयबोधः।

विशेषणसङ्गतस्येति। विशेषणबोधकपदसमभिव्याहृतस्येत्यर्थः। न च विशेषणबोधकपदाव्यवहितोत्तरवर्त्तित्वमेव विशेषणसङ्गतत्वमस्त्विति वाच्यं तदभावेऽप्युक्तस्थलद्वयेऽयोगव्यवच्छेदस्य बोधात्। वस्तुतस्तु कारकार्थान्वितधात्वर्थसमभिव्याहृतेनैवकारेण "ज्ञानमर्थं गृह्णात्येव" इत्यत्र ज्ञानेऽर्थविषयकत्वायोगव्यवच्छेदस्य "द्विजो वेदमधीत एव" इत्यत्र च द्विजे वेदाध्ययनायोगव्यवच्छेदस्य च बोधनात् विशेषणसङ्गतस्येतुपलक्षणं बोध्यम्। नचाग्रैवकारः क्रियासङ्गत एवात्यन्तायोगव्यवच्छेदं बोधयत्युपलक्षणाश्रयणमप्रयोजनकमिति वाच्यं ज्ञानविशेषणीभूतार्थविषयकत्वस्याभावे ज्ञानवृत्तितायाः, द्विजविशेषणीभूतवेदाध्ययनस्याभावे द्विजवृत्तितायाश्चाप्रसिद्धत्वेन क्रिया सङ्गतत्वनियामकाभावात्। अयोगव्यवच्छेद इति। विशेषणस्य योऽयोगः—अभावः, तस्य व्यवच्छेदः—अभाव इत्यर्थः। तथाच विशेषणे विशेष्यतावच्छेदकसमानाधिकरणाभावाप्रतियोगित्वमयोगव्यवच्छेद इति भावः। उदाहरणमाह यथा शङ्ख इति। एवञ्च शङ्खत्वसमानाधिकरणाभावाप्रतियोगिपाण्डरत्ववान् शङ्ख इति तत्रान्वयबोधः।

विशेष्यसङ्गतस्येति। विशेष्यबोधकं यत्पदं तद् समभिव्याहृतस्येत्यर्थः। एवकारस्येति पूर्व्वेणान्वयः। अन्ययोगव्यवच्छेद इति। विशेष्यपदार्थादन्यस्मिन् विशेषणपदार्थस्य योगः—सम्बन्धः, तस्य व्यवच्छेदः—अभाव इत्यर्थः। तथाच विशेषणे विशेष्यान्यवृत्त्यभावप्रतियोगित्वमन्ययोगव्यवच्छेद इति भावः। न चात्राप्यत्यन्तायोगव्ययच्छेदोऽयोगव्यवच्छेदो वाऽर्थ आस्तां किमन्ययोगव्यवच्छेदस्य पृथगर्थत्वकल्पनेनेसिवाच्यं क्वचिद्विशेष्ये विशेषणासत्त्वेऽत्यन्तायोगव्यवच्छेदस्य, सर्व्वविशेष्ये विशेषणसत्त्वे त्वयोगव्यवच्छेदस्य सम्भवात्। अत्र च विवक्षितस्य विशेष्यभिन्ने विशेषणाभावस्य यो बोधस्तस्य ताभ्यामनिर्व्वाहात्। अत्रोदाहरणमाह यथा पार्थ एवेति। अर्ज्जुन एवेत्यर्थः। तेन पृथापत्यत्वस्य युधिष्ठिरादौ सत्त्वेऽपि न क्षतिः। धनुर्द्धर इति। प्रशस्तधनुर्द्धर इत्यर्थः। तेन धनुर्द्धतिमत्त्वस्य दुर्य्योधनादौ सत्त्वेऽपि न क्षतिः। तथाच अर्ज्जुनान्यवृत्त्यभावप्रतियोगिप्रशस्तधनुर्द्धरत्ववानर्ज्जुन इति तत्रान्वयबोधः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

निपातानामसङ्ख्यत्वात्तेषां सर्व्वेषामर्थनिरूपणस्यात्रासम्भवादिववाकारादीनामप्यर्था यथायथं निर्व्वचनीया इत्याशयेनाह एवं दिशेति ॥ ६९ ॥

॥ इति श्रीजीवनकृष्णतर्कतीर्थं प्रणीता

तर्कामृतविवृतिः समाप्ता ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## ॥ उपसंहारः ॥

गभीरज्ञानसम्पत्त्या जगदीशायते इति ।
यस्यास्ति महती व्याप्तिर्ज्जगदीश्यादितः क्षितौ ॥ १ ॥

जगदीशस्य तस्यातिदुस्तरवचनाम्बुधिम् ।
अल्पज्ञानोडुपैस्तर्त्तुं साहसे मे प्रभुर्व्विभुः ॥ २ ॥

भ्रमात्प्रमादतो वात्र दुरुक्तं स्‌लिखितञ्च मे ।
शोधयन्तु बुधा मान्याः कृपया पूरयन्तु च ॥ ३ ॥

श्रीलशिरोमणिः पूज्यो रघुनाथशिरोमणिः ।
यत्र समुदितश्चिग्रामणिदीधितियोगतः ॥ ४ ॥

कुतर्कध्वान्तमुन्मथ्य तर्कतत्त्वमदीपयत् ।
'श्रीहट्टे' तत्र विख्याते विद्वन्मण्डलमण्डिते ॥ ५ ॥

अस्ति 'हिङ्गाजिया' ग्रामः प्रसिद्धस्तत्रजन्मभाक् ।
विप्रः श्रीजीवनकृष्णतर्कतीर्थो विदाम्वरः ॥ ६ ॥

ढाकायां विश्वविज्ञाते विश्वविद्यालये शुभे ।
सारस्वतसमाजाख्ये प्रायेणार्द्धशताब्दकम् ॥ ७ ॥

न्यायाद्यखिलशास्त्राणामध्यापनेषु तत्परः ।
अध्याप्यशतश श्छात्रान् भूयसीं ख्यातिमाप्नुवन् ॥ ८ ॥

सारस्वतसमाजस्य सभापतिपदं परम् ।
अतिमानमलङ्कृत्य न्यायाचार्य्यः सतां मुदे । ९ ॥

निर्म्माय मौलिकं ग्रन्थं 'न्यायप्रकाशिका' भिधम् ।
गूढार्थया 'विवृत्या' तं परिवर्द्ध प्रयत्नवः ॥ १० ॥

तत 'एकादशीश्राद्धे वैष्णवकृत्यनिर्णयम्' ।
निवन्धं 'नवरत्नं':च कृतवान्नवतत्त्वकम् ॥ ११ ॥

ततः कृतानेन सदर्थपुष्टा स्वध्यात्म शास्त्रार्णववोधदण्ड-
प्रमन्थनोद्भूतपरेशतत्त्वेन्द्रं श्वावलीवामतिदुस्तमोहा ॥ १२ ॥

तीर्थं तीर्थीकृतां भागवतानां चित्तकैरवम् ।
सद्यः प्रह्लादयेद्द या हि 'भगवन्नामकौमुदी' ॥ १३ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भारतीयोच्चकेन्द्रीयशिक्षणमन्त्रकेण सा ।
प्रकाशिता वुधप्रीत्यै समग्रव्ययदानतः ॥ १४ ॥

तथा विवुधसंपूज्यनैयायिकाग्रवर्त्तिना ।
रचिते जगदीशेन 'तर्कामृते'ऽथ विस्तृताम् ॥ १५ ॥

टीकामेतां गभीरर्थां कुरुतेऽतिप्रयत्नतः ।
अशेषकरुणासिन्धुर्दीनाशाकल्पपादपः ॥ १६ ॥

अकिञ्चनस्य दीनस्य मम श्रमैः कृतेन हि ।
ग्रन्थेनैतेन कारुण्यात् श्रीकृष्णः संप्रसीदतु ॥ १७ ॥

---

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. 5143

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

